## अथ सत्याषाढहिरण्यकेशिश्रौतसूत्रे धर्मप्रतिपादकषड्विंश-सप्तविंशप्रश्नगतविषयाणामनुक्रमणिका ।

## अनुक्रमणिका ।

सत्याषाढश्रौतसूत्रान्तर्गतविषयाणाम्-



इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे धर्मप्रतिपादकषाड्विंशसप्तविंशप्रश्नगतविषयाणामनुक्रमणिका समाप्ता ॥

# अथ सत्याषाढहिरण्यकेशिश्रौतसूत्रे पितृमेधीयाष्टाविंशै-कोनत्रिंशप्रश्नगतविषयाणामनुक्रमणिका ।

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे पितृमेधीयाष्टाविंशैकोनत्रिंशप्रश्नगतविषयाणामनुक्रमणिका समाप्ता ॥

## अथ सत्याषाढहिरण्यकेशिश्रौतसूत्रे षड्विंशसप्तविं-शाष्टाविंशैकोनत्रिंशप्रश्नगतसूत्राणां पाठक्रमेण प्रतीकानि ।

प्रतीकानि ।

सत्याषाढश्रौतसूत्राणां—

## अथ सत्याषाढहिरण्यकेशिश्रौतसूत्रे ( पितृमेधापरपर्याये ) सूत्राणां पाठक्रमेण प्रतीकानि ।

## अथ सत्याषाढहिरण्यकेशिश्रौतसूत्रे ( पितृमेधापरपर्याये ) सूत्राणां पाठक्रमेण प्रतीकानि ।

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे. षड्विंश·
सप्तविंशाष्टाविंशैकोनत्रिंशप्रश्नगतसूत्राणां
पाठक्रमेण प्रतीकानि ॥

---

अथ परिशिष्टगतसूत्राणां प्रतीकानि ।



इति परिशिष्टगतसूत्राणां प्रतीकानि ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# सत्याषाढविरचितं श्रौतसूत्रम् ।

( धर्मसूत्रापरपर्यायं षड्विंशसप्तविंशप्रश्नद्वयात्मकम् ) ।

## महादेवदीक्षितविरचितोज्ज्वलाव्याख्यासमेतम् ।

### अथ षड्विंशप्रश्नप्रारम्भः ।

तत्र प्रथमः पटलः ।

हिरण्यकेशिनं नत्वा गणेशं च गुरुं तथा ।
प्रश्नयोर्धर्मसंज्ञानां लिख्यते वृत्तिरुज्ज्वला ॥

**अथातः सामयाचारिकान्धर्मान्व्याख्यास्यामः ॥ १ ॥**

अथशब्द आनन्तर्यार्थोऽधिकारार्थो वा । अतःशब्दो *हेत्वर्थः । समयाचारप्राप्ताः +सामयाचारिकास्तान् ॥ १ ॥

* हेत्वर्थ इति—आचान्तेन कर्तव्यम्, यज्ञोपवीतिना कर्तव्यम् । 'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ' अशुचिकरनिर्वेषः 'द्विजातिकर्मभ्यो हानिः पतनम्, ' इत्यादिवचनाद्यस्मादुक्तानि श्रौतानि गार्ह्याणि कर्माणि ब्रह्महत्यादिप्रायश्चित्तानि च वक्ष्यमाणान्धर्मानपेक्षन्ते तस्मात्सामयाचारिकान्धर्मान् व्याख्यास्यामः कथयाम इति योजनयेत्यर्थः । + समयो नाम श्रुत्याद्यर्थविचारप्रवृत्तपुरुषकृतव्यवस्थोच्यते । सा च विधिनियमनिषेधभेदात्त्रिविधा । तत्र प्रवृत्तिप्रयोजनको विधिः। यथा संध्योश्च बहिर्ग्रामादासनम् , अहरहः संध्यामुपासीतेत्यादिः । निवृत्तिप्रयोजनकौ नियमनिषेधौ । तत्र प्राङ्मुखोऽन्नानि भुञ्जीतेत्यादिर्नियमः । क्षुदुपहन्तुं हि भोजने प्रवृत्तिः । तत्र यत्किंचिद्दिगभिमुखोऽपि भूत्वा भोजनेन क्षुत्प्रतिघातं कर्तुं शक्नोति नरः । एवं सति यत्प्राङ्मुखोऽन्नानि भुञ्जीतेत्युच्यते तेन नियमः क्रियते । प्राङ्मुख एव भूत्वाऽन्नानि भुञ्जीत नेतरदिगभिमुख इति । परिसंख्या तु नियमस्यैव क्रियताऽप्यंशेन भेदो बोध्यः । न कलञ्जं भक्षयेत्, न सुरां पिबेत्, नानृतं वदेत्, इत्यादिर्निषेधः । सोऽनृतवदनादिभ्यः पुरुषं निवारयतीति । तादृशसमयमूला आचाराः समयाचाराः। समयाचारेषु भवाः सामयाचारिकाः । एवंभूतान्धर्मानित्यर्थः । कर्मजन्यान्यभ्युदयनिःश्रेयसनिदानभूतानि पण्डापूर्वाणि धर्मा इति मीमांसकाः केचिद्वदन्ति । चोदनालक्षणोऽर्थो धर्म इति तु परे । धर्मपदं चाधर्मस्याप्युपलक्षणम् । अधर्मपरित्यागेन स्वविरोधिनोऽभावात्संचितधर्महानिसंभवप्रतिबन्धद्वाराऽधर्मस्यापि धर्मोपयोगित्वादित्यर्थः । धर्माधर्मलक्षणं सामान्यमुखेन विश्वामित्र आह—यमार्याः क्रियमाणं तु शंसन्त्यागमवेदिनः । स धर्मो यं विगर्हन्ते तमधर्मं प्रचक्षते ॥ इति । विधिषु विधिविषयानुष्ठानाद्धर्म इति तावत्सर्वसंमतम् । नियमनिषेधयोरपि नियमनअर्थानुष्ठानाद्धर्म इति केचिद्वदन्ति । अन्ये तु विधिविषयानुष्ठानादेव धर्मो न तु नियमनिषेधानुष्ठानात् । नियमनिषेधेषु हि तद्विपरीतानुष्ठानादधर्म एव केवलं न क्रियानपि कश्चिदपि धर्मः । न ह्यप्रतिगृह्णन्नपिबन्वा सुरां धार्मिक इति लोके प्रसिद्धमिति वदन्ति ।

समयशब्दं स्वयं व्याचष्टे—

धर्मज्ञसमयः ॥ २ ॥

धर्मज्ञाः* ऋष्यादयः ॥ २ ॥

तेषां तत्र प्रमाणं किमत आह—

=प्रमाणं वेदाः ॥ ३ ॥

अस्मिन्नर्थे वेदाः प्रमाणम् ॥ ३ ॥

चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः ॥ ४ ॥

ब्राह्मणाद्याश्चत्वारो वर्णाः सामयाचारिकैर्धर्मैरधिक्रियन्ते । चतुर्णामेवोपदेशेऽपि पुनश्चतुर्ग्रहणं यथाकथंचित्तेष्वन्तर्भूतानामपि ग्रहणार्थम् । ततश्च ब्राह्मणः क्षत्रियो वैश्य इति बोधायनादिभिरुक्तानामनुलोमजानामत्र ग्रहणं मतम् । तथा च गौतमः प्रति. लोमानामेवानधिकारमाह—प्रतिलोमा धर्महीना इति ॥ ४ ॥

तेषां पूर्वः पूर्वो जन्मतः श्रेयान् ॥ ५ ॥

जन्मत इति हेतुवचनात्सद्वृत्तादपि शूद्राद्वैश्यब्रुवोऽपि श्रेयान् । एवं वैश्यात्क्ष-त्रियः । क्षत्रियाद्ब्राह्मणः ॥ ५ ॥

* धर्मज्ञा इति । ते च यथा—तेष मन्वङ्गिरोव्यासगोतमात्र्युशनोयमाः । वसिष्ठदक्षसंवर्तशातातपपराशराः ॥ विष्ण्वापस्तम्बहारीताः शङ्खः कात्यायनो गुरुः । प्रचेता नारदो योगी बौधायनपितामहौ ॥ सुमन्तुः कश्यपो बभ्रुः पैठीनो व्याघ्र एव च । सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा । जाबालिर्जमदग्निश्च लौगाक्षिर्ब्रह्मसंभवः इति धर्मप्रणेतारः षट्त्रिंशदृषयः स्मृताः । इति । ननु येऽत्र परिगणितास्तावन्त एव धर्मज्ञा उतान्येऽपि सन्ति । सन्तीत्याह । तथा चाङ्गिराः—जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकाश्यपौ । व्यासः सनत्कुमारश्च शंतनुर्जनकस्तथा ॥ व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिंजलः । बौधायनः कणादश्च विश्वामित्रस्तथैव च । उपस्मृतय इत्येताः प्रवदन्ति मनीषिणः । इत्युक्तेः । तस्मात्पूर्वोक्तं न परिसंख्यानं किंतूदाहरणप्रदर्शनमात्रमिति बोध्यम् ।

= ननु कथं पुनरिदमवगम्यते यन्मन्वादय एव धर्मज्ञा न बुद्धादय इति । यदि च बुद्धादीमतीन्द्रियेऽर्थे धर्मे ज्ञानं न संभवतीत्युच्यते तर्हि मन्वादिष्वप्यतीन्द्रियार्थज्ञानासंभवः केन दण्डनिवारितः । अथ मन्वादीनां धर्मजादतिशयादतीन्द्रियेऽपि ज्ञानं युज्यत इति चेद्बुद्धादिष्वपि तत्समानम् । यदुक्तम्—सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा । तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोरिति । तस्मान्मन्वादीनां धर्मज्ञत्वे प्रमाणमाह—प्रमाणं वेदा इति । चोऽवधारणे । वेद एव मूलप्रमाणं धर्माधर्मयोः । नहि नित्येषु निर्दोषेषु वेदेषूक्तोपालम्भः संभवति । तस्मात्स्वतः-प्रमाणस्य शब्दस्य न वक्तृदोषनिबन्धनमप्रामाण्यम् । तदिहास्मदादीनां धर्मज्ञसमयः प्रमाणम् । धर्म-ज्ञानां तु वेदाः प्रमाणम् । मनुरप्याह—वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च । इति । यद्यपि धर्ममूलभूतोऽप्रत्यक्षो वेदोऽस्मदादिभिर्नोपलभ्यते तथाऽपि मन्वादय उपलब्धवन्त इत्यनुमीयते । वक्ष्यति च—तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते ( स०

**अशूद्राणामदुष्टकर्मणामुपनयनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि ॥**

**॥ ६ ॥**

शूद्रवर्जितानां त्रयाणां वर्णानामदुष्टकर्मणामुपनयादयो धर्माः । उपनय उपनयनम् । माणवकेनाऽऽत्मनः समीपं नय आगमनमिति यावत् । इ(द्विजा)तिकर्माध्ययनवत्कर्मत्वात् । अध्ययनस्य योग्यत्वात् । नात्र त्रैवर्णिकानामुपनयादि विधीयते । प्राप्तत्वात् । नापि शूद्राणां प्रतिनिषिध्यते । प्राप्त्यभावात् । तथाहि—उपनयनं तावद्गृह्ये सप्तवर्षं ब्राह्मणमित्यादिना त्रैवर्णिकानामेव विहितम् । इहापि तथैव विधास्यते । अध्ययनमप्युपेतस्याऽऽचार्यकुले ब्रह्मचारिवास इत्यारभ्य विधानादनुपेतस्य शूद्रस्याप्राप्तमेव । किंच श्मशानवच्छूद्रपतिताावित्यनध्यायप्रकरणे वक्ष्यते । ततश्च यस्य समीपेऽपि नाध्येयं स कथं स्वयमध्येतुमर्हति । अग्न्याधेयमिति । वसन्ते ब्राह्मणमित्यादिना त्रैवर्णिकानामेव विहितम् । फलवन्ति चाग्निहोत्रादीनि कर्माणि च त्रयाणामेव वर्णानामित्युक्तत्वात्त्रैवर्णिकानामेव नियतानि । विद्याग्न्यभावाच्च शूद्राणामप्रसक्तानि । उक्तो विद्याग्न्यभावः । तस्माद्दुष्टकर्मप्रतिषेधार्थं सूत्रम् । तथा स्मृत्यन्तरे द्विजातिकर्मभ्यो हानिः पतनमिति । पतनं पतनकरं कर्म द्विजातिकर्मभ्यो हानिकारं विश्लेषकरम् । द्विजातिकर्मसु न पतितस्याधिकार इति यावत् । एवमुपनयनादिप्रतिषेधादसत्यत्र प्रतिषेधे तु दुष्टकर्मणामप्यधिकारो भवत्येव । फलवन्ति च कर्माणीत्यभिधानात्फलेप्सुना क्रियत इति । कर्मेति वचनात् । चकारान्नित्यान्यपि । अथवा कर्मभिर्निःश्रेयसामित्युक्तत्वान्निःश्रेयसार्थत्वान्नित्येष्वपि प्राप्तिः । फलवद्ग्रहणं पूर्वेषामुपनयनादीनामङ्ग[ त्व ]लाभादि( र्थम् ) । तेन चकारः समुच्चयार्थ इत्यर्थः । यदपि प्रागुपनयनात्कामचारवादभक्ष इति गौतमस्मरणं तदपि ब्रह्महत्यादिमहापातकव्यतिरिक्तविषयमित्यनुपेतस्यापि दुष्टकर्मत्वसंभवाददुष्टकर्मणामुपनयादिकमित्युक्तम् । शूद्रप्रतिषेधस्तु नित्यप्राप्तानुवादः ॥ ६ ॥

एवं च यथा ब्राह्मणादीनामुपनयनादयो धर्माः प्रधानभूतास्तादृशं शूद्रस्य धर्ममाह—

**शुश्रूषा शूद्रस्येतरेषां वर्णानाम् ॥ ७ ॥**

इतरेषां ब्राह्मणादीनां या शुश्रूषा सा शूद्रस्य परमो धर्मः ॥ ७ ॥

तत्र विशेषः—

**पूर्वस्मिन्पूर्वस्मिन् वर्णे निःश्रेयसं भूयः ॥ ८ ॥**

शुश्रूषेत्यनुवृत्तिः । सर्वप्रकारं कृताया अपि वैश्यशुश्रूषाया मात्रयाऽपि कृता क्षत्रियशुश्रूषा बहुतरं फलं साधयति । एवं क्षत्रियशुश्रूषाया अपि ब्राह्मणशुश्रूषा । निःश्रेयसं निःश्रेयससाधनमतिशयेन जनयति । एषा नित्यकर्मत्वेनोक्ता प्रधानभूता ॥ ८ ॥

उपनयनं वेदाध्ययनमित्यादि यदुक्तमस्मिन्क्रम उपनयने विशेषमाह—

**उपनयनं विद्यार्थस्य श्रुतितः संस्कारः ॥ ९ ॥**

विद्या अर्थः प्रयोजनं यस्य स विद्यार्थः। तस्यायं श्रुतिविहितः संस्कारः। उपनयनमाचार्यसमीपे गमनं पूर्ववत्। विद्यार्थस्येति वचनान्मूकादेर्न संभवति। तथा च शङ्खलिखितौ—नोन्मत्तमूकान्संस्कुर्यादिति। विद्यार्थस्येति विधेयकर्तृलिङ्गस्य विवक्षितत्वात्स्त्रिया अपि न भवति। यद्यपि तस्या अग्ने गृहपत इत्यादिकया विद्ययाऽर्थस्तथाऽपि तस्या अनुपनीताया एवाऽऽधानात्पूर्वमेवाध्ययनं भवेत्। यावदुपयुक्तं मन्त्रजातये(मि)ति। श्रुतित इति वचनं तदतिक्रमे श्रौतातिक्रमप्रायश्चित्तं कर्तव्यं व्रात्यस्तोमाद्यपीति दर्शयितुम्। उपनयनस्य शाट्यायनिकश्रुतौ सेतिकर्तव्यताकस्य दृष्टस्योपनयनं व्याख्यास्यामः। जातत्वादिश्रौतभाष्यकारादिनिश्चि(श्चे)तुं स्मर्तुं निवेशः स्मार्तप्रकृतित्वात् (?) ॥ ९ ॥

अनेकवेदाध्यायिनां वेदव्रतवदुपनयनमपि प्रतिवेदं भेदेन कर्तव्यमिति प्राप्त उच्यते—

**सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम् ॥१०॥**

वेदेभ्य इति पञ्चमी। उद्धृत्येत्यर्थः। चतुर्थी वा तादर्थ्ये।
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥ इति मनुः।

अदूदुहदिति पृथक्कृतवान्। वेदार्थ एवात्रानूच्यत इति सिद्धानुवादाद्विधिः। ततश्चोपनयने यत्सावित्र्या अनुवाचनं तन्मुखेन सर्वे वेदा अनूक्ता भवन्तीत्यगृह्यमाणविशेषत्वादेकमेवोपनयनं सर्वार्थमिति न्यायः। अस्मिन्नर्थे शाट्यायनब्राह्मणमेव पठितम्। अथर्वणस्य वेदस्य पृथगुपनयनं वचनात्कर्तव्यम्। तथा च तत्रैव श्रुतं—नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधियीतेति। अन्यत्रान्यवेदार्थं भृग्वङ्गिरसोऽथर्वणो विद्वानेवोपनेताऽभिगम्यत इति विधातुं निन्दामाह—तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम्। यथा कश्चित्तमसः सकाशात्तम एव प्रविष्टो न किंचिज्जानात्येवमेवैष यं माणवकमविद्वानुपनयते तथा यश्चाविद्वान् ' उपनयते ' इत्यपेक्षते। यश्च स्वयमविद्वान्सन्नुपनयते सोऽपि तमस एव तमः प्रविशतीत्यस्मिन्नर्थे ब्राह्मणं भवति ॥ १० ॥

कीदृशस्तर्ह्युपनेताऽभिगम्यस्तत्राऽऽह—

**तस्मिन्नभिजनविद्यासमुदेतꣳ समाहितꣳ संस्कर्तारमिच्छेत् ॥ ११ ॥**

अविच्छिन्नवेदवेदिसंबन्धे कुले जन्माभिजनम्। अभिजनं विद्यां च सम्यगात्तं भूतगतं प्राप्तम्। कर्तरि(क्तः)। गत्यर्थाकर्मकेति सूत्रात्। षड्भिरङ्गैः सह यथावदर्थज्ञानपर्यन्तमधीतवेदविद्याः। पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिता वेदाः। तासां सर्वासामसंभवे वेद एव वा। तस्मिन्नुपनयने कर्तव्ये ताभ्यामभिजनविद्याभ्यां समुदेतं संपन्नम्। समाहितं

विहितप्रतिषिद्धेष्ववहितमनसं संस्कर्तारमाचार्यमिच्छेत् । इच्छया करणं लक्ष्यते । आप्नुयादधिगच्छेदिति ॥ ११ ॥

**तस्मिंश्चैव विद्याकर्माऽऽन्तमविप्रतिपन्ने धर्मेभ्यः ॥ १२ ॥**

तस्मिन्नेव चोपनेतरि विद्याकर्म विद्याग्रहणं कर्तव्यमारम्भादासमाप्तेः । अविप्रतिपन्ने धर्मेभ्यः । यद्यसावाचार्यो धर्मेभ्यः प्रच्युतो न भवति । प्रच्युते तु तस्मिन्नसंपर्कार्हेऽन्यतोऽपि विद्याकर्म भवत्येव । आचार्यान्तराद्भवतीति *द्रष्टव्यम् ॥ १२ ॥

आचार्यशब्दनिर्वचनमाह —

**यस्माद्धर्मानाचिनोति स आचार्यः ॥ १३ ॥**

यस्मात्पुरुषान्माणवको धर्मानाचिनोति आत्मनः प्रति चिनोति शिक्षते स आचार्यः । अप्यक्षरसाम्यान्निर्ब्रूयादिति चकारमात्रेणेदं निर्वचनम् । अनेन प्रकारेण माणवकमाचार्यः शौचाचारांश्च शिक्षयेदित्युक्तं भवति ॥ १३ ॥

**तस्मै न द्रुह्येत्कदाचन ॥ १४ ॥**

तस्मा एवं भूतायाऽऽचार्याय कदाचन कदाचिदपि न द्रुह्येत् । तद्विषयमपकारं च न कुर्यात् ॥ १४ ॥

कस्मादित्याह—

**स हि विद्यातस्तं जनयति ॥ १५ ॥**

स ह्याचार्यो माणवकं विद्यातो जनयति । यथा पिता मातृतः । अत्रास्य माता सावित्री पिता तु आचार्य इत्युच्यत इति शास्त्रान्तरम् । तथा मातुरग्रे प्रजायेत द्वितीयं मौञ्जिबन्धनादिति । इदमेव द्विजातिशब्दप्रवृत्तिनिमित्तम् ॥ १५ ॥

**तच्छ्रेष्ठं जन्म ॥ १६ ॥**

तद्विद्यातो जन्म श्रेष्ठं प्रशस्ततमम् । अभ्युदयनिःश्रेयसहेतुत्वात् ॥ १६ ॥

मातापितृभ्यामाचार्यः श्रेष्ठ इत्याह—

**शरीरमेव मातापितरौ जनयतः ॥ १७ ॥**

मातापितरौ हि शरीरमात्रमेव काष्ठकुड्यसमं जनयतः । आचार्यस्तु सर्वपुरुषार्थक्षमं रूपं जनयतीति । आचार्यः श्रेष्ठो गुरूणामिति च गौतमः ॥ १७ ॥

---

* द्रष्टव्यमिति । येषां चाऽऽचार्यकरणविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यते । कथम् उपनीयाध्यापनेनाऽऽचार्यकं भावयेदिति । सकृदुपनीतस्य माणवकस्य न पुनरुपनयनसंस्कारः संभवति । तत्कथमन्योऽध्यापयेदेनम् । एतेन मध्य आचार्यमरणे माणवकस्य तदनन्तरमध्ययनं नाऽऽचार्यान्तरात्संभवतीति द्रष्टव्यम् ।

तथाऽऽचार्यः श्रेष्ठतर इत्युक्तं तस्मै न द्रुह्येदिति च यदुक्तं तत्र वेदं प्रमाणयति श्लोकरूपम्—

**अथाप्युदाहरन्ति य आतृणत्त्यवितथेन कर्मणा· दुःखं कुर्वन्नमृत५ संप्रयच्छंस्तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कतमश्चनाहेति ॥ १८ ॥**

अथाप्यत्रापि पठन्ति य आचार्योऽवितथेन सफलेन कर्मणा माणवकं योजयति कर्माऽऽचाराध्ययनादि तस्मै शिक्षयति तदवितथम् । पितरौ केवलं तत्तच्छिक्षयतः । यदा शिक्षयतः प्रातरेव भोक्तव्यं वासो भूषादि धार्यमिति तद्भोगमात्रेण क्षीयतेऽतो वितथम् । किंच तावात्मनः सुखमेतत्कालं संपादयते न तथाऽऽचार्यः । आचार्य आत्म· नेऽतिप्रयासजन्यं दुःखं संपादयंस्तस्मा अमृततुल्यं परमाहितामिहामुत्र च तत्कर्मफलं ददत्कर्मणा योजयति तमेव पितरं मातरमुपदेष्टारं स्निग्धहितं मन्येत । अत एव तस्मै न द्रुह्येत् कतमश्चनैहिकमामुष्मिकं वा हितं जानानः । अहेत्यव्ययं छान्दसो वा दीर्घः । निश्चितमित्यर्थः ॥ १८ ॥

इदानीमविद्वांसमुपनयनमात्रज्ञं संस्कर्तारं संस्कृतं च निन्दति प्रतिषेधकल्पनाय—

**तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति विज्ञायते ॥ १९ ॥**

वेदमजानानो यं माणवकमुपनयते माणवकोऽविद्वान्य उपनेता( यः ) स च तमसः पापकर्मणः सकाशात् पापफलं दुःखाख्यं तमो मोहकरत्वं प्रविशति प्राप्नोति । माणवको ह्यज्ञाननिरासाय विद्यार्थसंस्कारमपेक्षते सोऽवेदविदुषा कृतस्तदा तेन निषिद्धेन संस्कारेण न संस्क्रियते नापि विद्यां प्राप्नोतीति । तथोपनेताऽपीह लाभपूजाख्यादिकं न प्राप्नोति । लोकनिन्दितेन कर्मणा दुःखं न प्राप्नोतीति विज्ञायते श्रुतिरित्यर्थः ॥ १९ ॥

एवं संस्कारकसंस्कार्यौ व्याख्याय त्रयाणामेव कालं व्याचष्टे—

**वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्य५ शरदि वैश्यम् ॥ २० ॥**

प्राप्ताधिकारोऽत्रोपनेयादिर्ग्राह्य इति व्याख्येयम् । वसन्ते ब्राह्मणमित्यादि गृह्ये गतम् ॥ २० ॥

**गर्भाष्टमेषु ब्राह्मणं गर्भैकादशे राजन्यं गर्भद्वाद· शेषु वैश्यम् ॥ २१ ॥**

गर्भस्थस्य यः कालो वर्षं सोऽपि गर्भस्तस्मादष्टमं वर्षपूरणं येषां तानि तेषूपनय· नम् । नायमपूर्वो विधिः किंतु सप्तवर्षमित्यादिगृह्यवद्व्याख्या । बहुवचनं कन्यानामपि तेष्वन्तर्भावार्थम् ॥ २१ ॥

अथ काम्यानि ॥ २२ ॥

कामनिमित्तान्युपनयनानि वक्ष्यन्ते ॥ २२ ॥

सप्तम आयुष्काममष्टमे ब्रह्मवर्चसकामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामम् ॥ २३ ॥

एतानि षट् सूत्राणि स्पष्टार्थानि । सर्वत्रोपनयेदित्यपेक्षते ॥ २३ ॥

आचार्याधीनः स्यादित्यादीनि यानि ब्रह्मचारिणो व्रतानि वक्ष्यन्ते तेष्वसमर्थानां कुमाराणां वर्णक्रमेणानुकल्पानाह—

आ षोडशाद्ब्राह्मणस्यानात्यय आ द्वाविंशात्क्षत्रियस्याऽऽचतुर्विंशाद्वैश्यस्य ॥ २४ ॥

येषां त्वाचार्यकरणविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यते । उपनीयाध्यापनेनाऽऽचार्यत्वं भवति । न च सकृदुपनीतस्य माणवकस्य पुनरुपनयनसंस्कारः संभवति । तत्कथमन्योऽध्यापयेत् । एतेनाध्येष्यमाणस्य माणवकस्य तदन्तमध्ययनं स्यात् । अज्ञेन कृतस्य संस्कारस्य कृतत्वाद्वैगुण्यं प्रायश्चित्तेन परिहार्यम् । अत्र वसन्तादिविधानं गृह्ये कृतमपि पुनः क्रियते तत्तु स्मार्यते । गर्भाष्टमेष्वित्यादिविषयः । यदन्यैरष्टमे ब्राह्मणमित्युच्यते तत्तु गर्भान्तेन सप्तमे इति यदुक्तं तेन विकल्प्यते । यच्च स्मृत्यन्तरात्क्षत्रियवैश्ययोर्गर्भैकादशद्वादशयोः श्रवणं तत्तु गृह्योक्तेन विकल्प्यते । न्यूनत्वात् । किंचात्र सप्तमीबहुवचनेन पूरणप्रत्ययेनायमर्थः—गर्भादष्टमं वर्षमेकादशं द्वादशं च तेषु सत्स्वेवेत्ययं नियम आचार्यस्येष्टस्तेनाथशब्देनाऽऽनन्तर्यवाचिना च काम्येषु पूर्वतने नियमे सतीत्येव काम्यानि नत्वशक्तविषयेऽङ्गीकृतो गौणोऽपि कालः फलाङ्गमिति । तेन गर्भसप्तमे ब्राह्मणं ब्रह्मवर्चसकामस्य गर्भाष्टमेनाऽऽह—नवम इत्यादि । क्षत्रिये त्वेकादशमभिव्याप्येत्येव तस्य न पशुकामस्योपनयनं गर्भाष्टम इत्यनुवर्तते । अग्रेऽपि गर्भद्वादशेषु गर्भाद्द्वादशेषु ये गर्भाष्टमान्तास्तेषु क्षत्रियवैश्ययोर्ब्रह्मवर्चसकामः पारलौकिकः । अवश्यं चैतदङ्गीकार्यम् । कुतः । इदं तावत्प्रयोजनं गृह्यात्पुनरुक्तिपरिहारः । तथा च विशिष्टविधिना च फलार्थविधेर्विरुद्धत्रिकद्वयापत्त्या वाजपेयाधिकरणे निराकृतत्वात् । अथ गोदोहनवद्विधिः प्रकृतोपनयन एव । स किं गृह्यात्प्राप्तो न भवति । तत्र सप्तवर्षाद्युत्पत्तिशिष्टगुणावरोधाद्विरुद्धाष्टवर्षादिगुणविधिः फलार्थो न संभवति । स एवाऽऽचार्येण स्वीकृतः । तत्र वसन्तादिगुणविधयः शाट्यायनकात् । अथ शाखान्तरीयोऽत्र वसन्ते ब्राह्मणमित्यादिविशिष्टस्तत्र विरोधो नास्तीति चेत् तर्हि तत्राथशब्दमधिकारार्थं व्यर्थमप्यङ्गीकृत्याष्टवर्षादिव्याख्यानं नित्यमेव स्यात् । तथा च ब्राह्मणस्याष्टमादप्यकाम्यान्यपरयो.

ष्टममारभ्येति प्राप्ताच्छास्त्रान्तरात्प्राप्तकालविधिः स्वीकार्यो वा पूर्वोक्त एव वा पक्षः स्वीकार्यः । गृह्ये सप्तवर्षव्याख्यानार्थमुत्तरयोरेकादशद्वादशविकल्पितगर्भैकादशद्वादशाविधिर्न भवत्येव बहुवचनवैयर्थ्यादित्यलमति प्रसङ्गेन । गृह्ये सप्तवर्षादिविशिष्टः कर्तारमुपगच्छेदिति विशिष्टविधिर्वसन्तादिगुणविधिस्तत्र काम्यविधीनामसंभवाद्वसन्तादिव्यतिरिक्तेनासंभवाद्गुणविधिर्न । तदर्थमाह—वसन्तादिविशिष्टविधिरत्र तथैतस्मिन्यदि काम्यगुणविधिस्तदाऽपि वसन्तादिर्व्यभिचारी । यदा तु गर्भाष्टमेष्वित्यादिना काम्यविधिस्तदाऽसावत्रत्येन वसन्तादिना त्वविशिष्ट इत्युदगयनादिकालेऽपि भवति । भवति च गृह्योक्तवसन्तादावपीति विकल्पः । गृह्य उत्पत्तिविशिष्टत्वेन वसन्तादिविधानाच्छास्त्रान्तरेणोदगयनादिना नित्योपनयनमपि विकल्प्यते । अत्रत्यं न विकल्पते । आकारोऽभिविधौ । अत्ययोऽतिक्रमः । स एवात्ययः । तदभावोऽनात्ययः । याहच्छिको दीर्घः । आङो वा प्रयोगः । प्रकरणादुपनयनस्येति गम्यते ॥ २४ ॥

यथा व्रतेषु समर्थः स्याद्यानि वक्ष्यामः ॥ २५ ॥

यथा व्रतेषु समर्थः स्यात्तथा एतावान्कालः प्रतीक्ष्यः । पूर्वमेव तु सामर्थ्ये सत्यष्टवर्षत्यतिक्रमे वक्ष्यमाणप्रायश्चित्तमेव भवति । एवं षोडशादिभ्य ऊर्ध्वं कियन्तंचित्कालमसमर्थानां पश्चात्सामर्थ्ये सति प्रायश्चित्तं भवत्येव ॥ २५ ॥

तदिदं प्रायश्चित्तमाह

अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत् ॥ २६ ॥

यस्य यः सावित्र्याः कालस्तदतिक्रमे त्रैविद्यकं ऽयवयवा विद्या तामधीयते त्रैविद्यास्तेषामिदं त्रैविद्यकम् । 'गोत्रचरणाद्वुञ्'[1] 'चरणाद्धर्माम्नाययोरिति वुञ्'[2] । एवं भूतं ब्रह्मचर्यमग्निपरिचर्यामध्ययनं गुरुशुश्रूषामिति परिहाय सकलं ब्रह्मचर्यधर्मं चरेत् । कियन्तं कालम्—ऋतुम् । कालाध्वनोरत्यन्तसंयोग इति द्वितीया । ऋतुमिति वचनादृत्वारम्भे प्रायश्चित्तारम्भामिच्छन्ति ॥ २६ ॥

तत उपनयनम् ॥ २७ ॥

एवंचरितव्रत उपनेतव्यः ॥ २७ ॥

अथोदकोपस्पर्शनम् ॥ २८ ॥

तत उपनयनादारभ्य संवत्सरमुदकोपस्पर्शनं स्नानं कर्तव्यम् । शक्तस्य त्रिषवणमशक्तस्य यथाशक्ति । संवत्सरमित्यापस्तम्बे दर्शनात् ॥ २८

अथाध्याप्यः ॥ २९ ॥

चरितव्रतः पश्चादध्याप्यः ॥ २९ ॥

1 (पा० सू० ४ । ३ । १२६) 2 (पा० सू० २ । ३ । ५ )।

अथ यस्य पिता पितामह इत्यनुपनीतौ स्यातां ते ब्रह्महसंस्तुताः ॥ ३० ॥

यस्य माणवकस्य पिता पितामह इत्यनुपनीतौ स्यातां स्वयं च ते तथाविधा माणवका ब्रह्महसंस्तुता ब्रह्महण इत्येवं कीर्तिता ब्रह्मवादिभिः । अतस्तस्मिंस्तच्छब्दप्रयोगस्तद्धर्मप्राप्त्यर्थः । श्मशानवच्छूद्रपतितावित्यध्ययनप्रतिषेधो वक्ष्यते । ततश्च यथा ब्रह्महसमीपे नाध्येयमेवमेषामपीति ॥ ३० ॥

तेषामभ्यागमनं भोजनं विवाहमिति वर्जयेत् ॥ ३१ ॥

तेषामेषामभ्यागमनमाभिमुख्येन गमनं मातृपितृपुत्रदारशरीररक्षणार्थमपि वर्जयेत् । यद्यपि रक्षा सर्वतः प्रग्राह्येति वक्ष्यते, भोजनमुद्य(द्धृ)तमपि वर्जयेत् । अपि दुष्कृतकारिण इति सत्यपि वचने विवाहं वर्जयेत् । यद्यपि स्त्रीरत्नं दुष्कुलादपीति मानववचनं च ॥ ३१ ॥

तेषामिच्छतां प्रायश्चित्तम् ॥ ३२ ॥

इच्छतामिति वचनान्न बलात्कारेण प्रायश्चित्तं कारयितव्याः ॥ ३२ ॥

यथा प्रथमेऽतिक्रम ऋतुरेवं संवत्सरम् ॥ ३३ ॥

यथा प्रथमे ब्रह्मचर्यस्य ऋतुः काल एवमस्मिन्नतिक्रमे संवत्सरः कालः । अथोपनयनं तत उदकोपस्पर्शनमिति पूर्ववच्छेपमापस्तम्बदर्शनाच्च ॥ ३३ ॥

प्रतिपूरुषं संख्याय संवत्सरान्यावन्तोऽनुपेताः स्युः ॥ ३४ ॥ (ख० १)

यदि पितैवानुपेतः स्यात्संवत्सरमेकम् । अथ पितामहोऽपि ततो द्वौ । अथ स्वयमपि यथाकालमनुपेतस्ततः संवत्सरानिति ॥ ३४ ॥ (ख० १ ) ॥

अथोदकोपस्पर्शने मन्त्राः—

सप्तभिः पावमानीभिर्यदन्ति यच्च दूरक इत्येताभिर्यजुष्पवित्रेण सामपवित्रेणाऽऽङ्गिरसेनेति ॥ ३५ ॥

पवमानः सोमो देवता यासां ताः पावमान्यः । यजुष्पवित्रेण 'आपो अस्मान्मातरः शुन्धयन्तु' इत्येतेन । सामपवित्रेण कया नश्चित्र आभुवदिति तृचेन गीतेन वामदेव्येन साम्ना आङ्गिरसेन हंसः शुचिषदित्येतेन । एतैरञ्जलिना शिरस्यपोऽवसिञ्चेत् ॥३५॥

अपि वा व्याहृतिभिरेव ॥ ३६ ॥

पूर्वैः सह व्याहृतीनां विकल्पः ।

अथाध्याप्यः ॥ ३७ ॥

गतम् । अथ यस्य पिता पितामह इत्युपक्रमे यस्येत्येकवचनमन्तेऽपि अथाध्याप्य इति, मध्ये तु ब्रह्महसंस्तुतास्तेषामभ्यागमनं तेषामिच्छतामिति बहुवचनं तत्रोपक्रमोपसंहारानुसारेण माणवकस्यैव प्रायश्चित्तमुपनयनमध्यापनं च । बहुवचनं तु तथाविधमाणवकबहुत्वापेक्षमित्यवोचाम ॥ ३७ ॥

अथ यस्य प्रपितामहादि नानुस्मर्येत उपनयनं ते श्मशानसंस्तुताः ॥ ३८ ॥

प्रपितामहादारभ्य प्रपितामहः पितामहः पिता स्वयं च यथाकालमितिते तथाविधा माणवकाः श्मशानसंस्तुताः । तेन श्मशाने सर्वतः शम्याप्रासादित्यध्ययननिषेध एषामपि संनिधौ भवति ॥ ३८ ॥

तेषामभ्यागमनं भोजनं विवाहमिति वर्जयेत्तेषामिच्छतां प्रायश्चित्तं द्वादश वार्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेत्तत उपनयनमथोदकोपस्पर्शनं पावमानी(न्यादि)भिः ॥ ३९ ॥

गतम् । पावमानी(न्यादि)भिरित्यनेन प्रतिपुरुषं संख्याय संवत्सरानित्येतदपि द्रष्टव्यम् ॥ ३९ ॥

अथ गृहमेधोपदेशनम् ॥ ४० ॥

गृहमेधो गृह्यशास्त्रं गृहस्थस्य धर्मो वा ॥ ४० ॥

नाध्यापनम् ॥ ४१ ॥

कृत्स्नस्य वेदस्य किंतु गृह्यमन्त्राणामेव ॥ ४१ ॥

ततो यो निर्वर्तते तस्य संस्कारो यथा प्रथमेऽतिक्रमे ॥ ४२ ॥

तत एवं कृतप्रायश्चित्तादूगृहस्थीभूताद्यो निर्वर्तत उत्पद्यते तस्योपनयनसंस्कारः कर्तव्यः । कथं यथा प्रथमेऽतिक्रम ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरित्वेत्यन्तम् ॥ ४२ ॥

तत ऊर्ध्वं प्रकृतिवत् ॥ ४३ ॥

ततस्तु यो निर्वर्तते तस्य प्रकृतिवत् । यथाप्राप्तमुपनयनं कर्तव्यमिति । यस्य पितुरारभ्य नानुस्मर्येत उपनयनं तत्र प्रायश्चित्तं नोक्तं धर्मशास्त्रैस्तूहितव्यम् । निरूपितमन्यत्र ॥ ४३ ॥

अथाध्ययनविधिः—

उपेतस्याऽऽचार्यकुले ब्रह्मचारिणो वासः ॥ ४४ ॥

एवं यथाविध्युपेतस्य ब्रह्मचारिणः संततमाचार्यकुले वासो भवति । ब्रह्म वेदस्तदर्थं व्रतं चरतीति ब्रह्मचारी । अध्ययनाङ्गानि व्रतानि चरितुं नित्यमाचार्यकुले वस्तव्यमिति उक्तं भवति ॥ ४४ ॥

तत्र कालः—

अष्टाचत्वारिंशद्वर्षाणि ॥ ४५ ॥

चतुर्णां वेदानामेषोऽध्ययनकालः । एवं च प्रतिवेदं द्वादश वर्षाणि ॥ ४५ ॥

एषः कालः—

पादोनम् ॥ ४६ ॥

स एव एष कालः पादोनं वा प्रत्येतव्यः । पादेनोनं पादोनम् । प्रकृत्यादित्वात्पादेनेति तृतीया । तद्भवत्षट्त्रिंशद्वर्षाणि । प्रतिवेदं नव नव ॥ ४६ ॥

अर्धोनम् ॥ ४७ ॥

ऊनमित्येव समस्तचतुर्विंशतिर्वर्षाणि । प्रतिवेदं षट् ॥ ४७ ॥

त्रिभिर्वा ॥ ४८ ॥

पादैरूनमिति प्रकरणाद्गम्यते । द्वादश वर्षाणि । प्रतिवेदं त्रीणि ॥ ४८ ॥

द्वादशावरार्ध्यम् ॥ ४९ ॥

अवरार्ध्यशब्दोऽवरमात्रेत्यस्मिन्नर्थे वर्तते । द्वादश वर्षाण्यवरा मात्राऽवरमानं न्यूनमानं यथा भवति तथा ब्रह्मचारिणा गुरुकुले वस्तव्यम् । पूर्वेणैव सिद्धे ब्रह्मचार्यतिमेधावितया चतुरो वेदानितोऽल्पीयसा कालेन गृह्णाति तेनाप्येतावत्कालं गुरुकुले वस्तव्यम् । यावद्ग्रहणमित्यस्मिन्नपि पक्षे नातित्वरितेन स्नातव्यमिति । एवमर्थमिदमारभ्यते । एवमेकस्य वेदस्य ब्रह्मचर्यमवश्यंभावीत्यर्थात्सिद्धम् । गृह्ये षट्त्रिंशत्कालो नोक्तोऽ* तु द्वादशन्यूनेनोक्तस्तस्माद्विकल्पार्थमेकवाक्यता । मनुरप्याह—

षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् ।
तद(र्धि)कं पादिकं वा ग्रहणान्तिकमेव वेति ॥

त्रयाणां वेदानां षट्त्रिंशत् । एकैकस्य द्वादश । तदर्धिकं त्रयाणामष्टादश । एकैकस्य षट् । पादिकं वा त्रयाणां नव । एकैकस्य त्रीणि । ग्रहणान्तिकमेवेत्येकैकस्य त्रिभ्य ऊर्ध्वं नियमो न प्रागित्यर्थो द्रष्टव्यः । अन्ये द्वादश द्वादशैकैकवेदार्थे यथाकामं यावद्ग्रहणपक्षोऽपि तुल्यं विकल्पते । अपरे जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति श्रुतिविरोधपरिहारायाष्टाचत्वारिंशन्नमिति पक्षमाधानानधिकारिणि मन्यन्ते । पक्षान्तराणि तु अधिकारिषु ॥ ४९ ॥

न ब्रह्मचारिणो विद्यार्थस्य परोपवासोऽस्ति ॥ ५० ॥

ब्रह्मचारिविद्यार्थशब्दयोरर्थ उक्तः । यो ब्रह्मचारी विद्यार्थो भवति न तेन दिवसमात्रमपि परस्य समीपे वस्तव्यम । आचार्यसमीपे वस्तव्यमित्युक्तं भवति । विद्यार्थस्येति वचनान्नैष्ठिकस्य कदाचिदन्यत्र वासेऽपि न दोषः । यद्वा भोजननिवृत्तिरेवोपवासः । परलोकायोपवासः परोपवासः । स विद्यार्थस्य न भवति । नैष्ठिकस्य न दोष इति । अत्र पक्ष आहिताग्निरनड्वानित्यादिविद्यार्थब्रह्मचारिविषयम् ॥ ५० ॥

अथ ब्रह्मचर्यविधिः ॥ ५१ ॥

ब्रह्म वेदस्तदर्थं यद्व्रतं चरितव्यं तद्ब्रह्मचर्यमधिक्रियते ॥ ५१ ॥

आचार्याधीनः स्यादन्यत्र पतनीयेभ्यः ॥ ५२ ॥

आचार्याधीनतया स्थातव्यमिति विधिरनधीयानस्याप्युपनयनानन्तरम् । अन्यत्र पतनीयेभ्य इति विशेषं वक्ष्यामीति पतनीयेभ्य इति कारेण ( करणे ) कृत्यप्रत्ययः । कृत्यल्युटो बहुलमिति । अस्मदरातिं ब्राह्मणं व्यापादयेत्याचार्येण चोदितोऽप्येवमादि न कुर्यात् ॥ ५२ ॥

हितकारी गुरोरप्रतिलोमयन्वाचा ॥ ५३ ॥

आचार्येण प्रयुक्तोऽप्यप्रयुक्तोऽपि तस्मै हितमेव कुर्यात, वाचा प्रातिकूल्यमकुर्वन् । अत्र गुरुराचार्यः ॥ ५३ ॥

अधासनशायी ॥ ५४ ॥

आसनमुपवेशनं भावे ल्युट् । शयनं शायः । भावे घञ् । अध आसनशायौ यस्य सोऽधासनशायी । नित्ययोगार्थमिन्प्रत्ययोऽन्यथा बहुव्रीहिणैवालम् । गुरुसंनिधावध आसीताधः शयीतेत्युक्तं भवति । अधः शब्दस्य सवर्णदीर्घश्छान्दसोऽकारलोपश्च । अपपाठो वा । तृणेषु प्रस्तरेषु वाऽऽसनशयने शिष्टाचारसिद्धे ॥ ५४ ॥

नानुदेश्यं भुञ्जीत ॥ ५५ ॥

अनुदेश्यं श्राद्धान्नं देवतार्थं वोद्दिष्टं न भुञ्जीत । अग्रे न दोषो ब्रह्मचार्यर्थत्वेन कल्पितत्वात् ॥ ५५ ॥

तथा क्षारलवणमधुमांसानि ॥ ५६ ॥

न भुञ्जीतेत्येव । क्षारलवणादीनि गृह्ये भोक्तव्यानीति उक्तं तत्फलार्थिनो, निषेधो न भोक्तव्यानीति क्षारलवणानाम् । इक्षुविकाराः क्षाराः । लवणानि सामुद्रादीनि ॥ ५६ ॥

अदिवास्वापी ॥ ५७ ॥

दिवा न स्वप्यात् ॥ ५७ ॥

अगन्धसेवी ॥ ५८ ॥

चन्दनादिगन्धद्रव्याणि न सेवेत ॥ ५८ ॥

मैथुनं न चरेत् ॥ ५९ ॥

उपचारः क्रिया केलिः स्पर्शो भूषणवाससाम् ।
एकशय्यासनक्रीडाश्चुम्बनालिङ्गने तथा ॥

इत्यादेः सर्वस्योपलक्षणं मैथुनग्रहणम् ॥ ५९ ॥

उत्सन्नश्लाघः ॥ ६० ॥

श्लाघा शोभा सा उत्सन्ना यस्य स उत्सन्नश्लाघः । एवंभूतो भवेत् । प्रक्षणादिना मुखादिकमुज्ज्वलं न कुर्यादिति ॥ ६० ॥

अङ्गानि न प्रक्षालयीत ॥ ६१ ॥

विना शिरसा मु(सु)खार्थमुष्णोदकादिना शरीरं न प्रक्षालयेत् ॥ ६१ ॥

प्रक्षालयीत त्वशुचिलिप्तानि गुरोरसंदर्शे ॥ ६२ ॥

यानि तु मूत्रपुरीषाद्यशुचिलिप्तानि अङ्गानि तानि मृद्भिः प्रक्षालयेद्यावद्गन्धलेपश्चापैति । तदपि गुरोरसंदर्शे यत्र स्थितो गुरुरमुं न पश्यति तत्र । आचार्यप्रकरणे गुरुग्रहणात् पित्रादीनामपि ग्रहणम् ॥ ६२ ॥

नाप्सु श्लाघमानः स्नायात् ॥ ६३ ॥

स्नाने प्राप्ते न श्लाघमानः स्नायात् । किंतु दण्डवत्प्लवेत् । स्नानीयैर्द्रव्यैर्मलापकर्षणं श्लाघा, क्रीडा वा जले ॥ ६३ ॥

जटिलः शिखाजटो वा स्याद्वापयेदितरान् ॥ ६४ ॥

सर्वकेशानां जटा अथवा शिखामेव जटां कृत्वा इतरान्केशान्वापयेन्नापितेन ॥ ६४ ॥

त्रिवृन्मौञ्जी मेखला ब्राह्मणस्य शक्तिविषये दक्षिणावृत्तानाम् ॥ ६५ ॥

मुञ्जानां विकारो मौञ्जी । त्रिवृत् त्रिगुणा । एवं भूता ब्राह्मणस्य मेखला भवति । सा च शक्तिविषये शक्तौ सत्यां दक्षिणावृत्तानां कर्तव्या । तद्धितार्थे गुणभूतानामपि मौञ्जानामेतद्विशेषणम् ॥ ६५ ॥

ज्या राजन्यस्य ॥ ६६ ॥

स्पष्टम् ॥ ६६ ॥

मौञ्जी वाऽयोमिश्रा ॥ ६७ ॥

अथवा अयोमिश्रा क्वचित्कालायसेन बद्धा मेखला ॥ ६७ ॥

आवीसूत्रं वैश्यस्य सैरी तामली वेत्येके ॥ ६८ ॥

अविरूर्णायुः । तत्संबन्धिनी ऊर्णा आवी । तत्कृतं सूत्रमावीसूत्रम् । सा मेखला वैश्यस्य भवति । सैरी सीरवाहयोक्त्ररज्जुः । तमालो वृक्षस्तस्य त्वचा ग्रथिता तामली ॥ ६८ ॥

बैल्वः पालाशो वा दण्डो ब्राह्मणस्य नैयग्रोधः स्कन्धजोऽवाङ्ग्रो राजन्यस्य बादर औदुम्बरो वा वैश्यस्य वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति ॥ ६९ ॥

गृह्ये गता एव केचिद्विकल्पाय स्मार्यन्ते ॥ ६९ ॥

वासः ॥ ७० ॥

वस्यते कौपीनमाच्छाद्यते येन तद्वासः ॥ ७० ॥

वक्ष्यते—

शाणीक्षौमाजिनानि ॥ ७१ ॥

शणस्य विकारः शाणी पटी । क्षुमा अतसी तस्य विकारः क्षौमम् । श्वेतपट्टाख्यो वासोविशेष इत्यन्ये । अजिनं यस्य कस्याचिन्मेध्यस्य पशोः । त्रीण्येतानि वर्णविशेषेण वासांसि ॥ ७१ ॥

काषायं चैके वस्त्रमुपदिशन्ति ॥ ७२ ॥ ( ख० २ )

वस्त्रं कार्पासं तच्च काषायं कषायेण रक्तं पूर्ववत् ॥ ७२ ॥ ( ख० २ )

माञ्जिष्ठं राजन्यस्य ॥ ७३ ॥

मञ्जिष्ठया रक्तं माञ्जिष्ठम् ॥ ७३ ॥

हारिद्रं वैश्यस्य ॥ ७४ ॥

हरिद्रया रक्तं हारिद्रं वैश्यस्य । एतान्युत्तरीयाणि ॥ ७४ ॥

हारिणमैणेयं वा कृष्णं ब्राह्मणस्य ॥ ७५ ॥

बस्ताजिनमिति वक्ष्यमाणत्वादिहाप्यजिनमिति गम्यते । अजिनमुत्तरमुत्तरया इत्युपनयने यदजिनं धार्यमुक्तं तद्धारणं ब्राह्मणस्य । हरिणो मृगस्तस्य विकारः । ऐणेयं वा कृष्णम् । एणी मृगी तस्या विकार ऐणेयम् । एण्या ढञ् । द्विविधा एण्यः कृष्णा गौराश्च । अतो विशेष्यते कृष्णमैणेयमिति ॥ ७५ ॥

अस्मिन्पक्षे विशेषमाह—

**कृष्णं चेदनुपस्तीर्णासनशायी स्यात् ॥ ७६ ॥**

कृष्णं चेद्धिमृगाजिनं केवलं हारिणं तस्मिन्नुपस्तीर्णे नाऽऽसीत न च शयीत । अयं तावदर्थः । शब्दनिर्वाहस्तु अथासनशायीत्यत्र कृतः ॥ ७६ ॥

**रौरवं राजन्यस्य ॥ ७७ ॥**

रुरुर्बिन्दुमान्मृगः ॥ ७७ ॥

**बस्ताजिनं वैश्यस्य ॥ ७८ ॥**

बस्तश्छागः ॥ ७८ ॥

**आविकं सार्ववर्णिकम् ॥ ७९ ॥**

अविरूर्णायुः । स एवाऽऽविकः । तस्य चर्माऽऽविकम् । तत्सर्वेषामेव वर्णानाम् । तस्य हारिणादिभिर्विकल्पः ॥ ७९ ॥

**कम्बलश्च ॥ ८० ॥**

अयमप्याविक एव प्रावरणः सर्वेषाम् ॥ ८० ॥

काषायं चैके वस्त्रमुपदिशन्तीत्यारभ्य वासांस्यजिनानि च विहितानि तत्र कामवशेन विशेषमाह—

**ब्रह्मवृद्धिमिच्छन्नजिनान्येव वसीत क्षत्रवृद्धिमिच्छन्वस्त्राण्येवोभयवृद्धिमिच्छन्नुभयमिति हि ब्राह्मणम् ॥ ८१ ॥**

ब्रह्मवृद्धिर्ब्राह्मण*वृद्धिः । क्षत्रवृद्धिः क्षत्रिय+वृद्धिः ॥ ८१ ॥

अथ स्वपक्षमाह —

**अजिनं त्वेवोत्तरं धारयेत् ॥ ८२ ॥**

उत्तरमुत्तरीयमजिनमेव धारयेत् ॥ ८२ ॥

**न गायेन्न रोदेत् ॥ ८३ ॥**

गानं सामव्यतिरिक्तं न कुर्यात् । अश्रूणि न मुञ्चेत् ॥ ८३ ॥

**अनृत्तदर्शी ॥ ८४ ॥**

न नृत्तं पश्येत् ॥ ८४ ॥

---

* ब्राह्मणत्वोत्कर्षः । + मनप्राप्तिरित्यर्थः ।

सभाः समाजांश्चागन्ता ॥ ८५ ॥

द्यूतादिस्थानं सभा । उत्सवादिषु समवायाः समाजाः । ताः सभाः समाजांश्च ताच्छील्येन नो गच्छेत् । यदृच्छया गमने न दोषः ॥ ८५ ॥

अजनवादशीलः ॥ ८६ ॥

जनवादः परिवादो लोकवार्ता वा तच्छीलो न स्यात् ॥ ८६ ॥

रहःशीलः ॥ ८७ ॥

सति संभवे रहःशीलः स्यात् ॥ ८७ ॥

गुरोरुदाचारेष्वकर्ता स्वैरिकर्माणि ॥ ८८ ॥

येषु प्रदेशेषु गुरुरुदाचरति पौनःपुन्येन चरति तेषु स्वैरिकर्माणि मैत्रप्रसाधनादीनि न कुर्यात् ॥ ८८ ॥

स्त्रीभिर्यावदर्थसंभाषी ॥ ८९ ॥

स्त्रीभिः सह यावत्प्रयोजनमेव संभाषेत न प्रसक्तानुप्रसक्तमतिचिरम् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षतीति । अतिबालाभिरतिवृद्धाभिश्च न दोषः ॥ ८९ ॥

मृदुः ॥ ९० ॥

क्षमावान् ॥ ९० ॥

शान्तः ॥ ९१ ॥

इन्द्रियाणामसद्विषये प्रवृत्त्यभावः शमः । तद्वाञ्शान्तः ॥ ९१ ॥

दान्तः ॥ ९२ ॥

विहितेषु कर्मसु दमः । तद्वान् ॥ ९२ ॥

ह्रीमान् ॥ ९३ ॥

ह्रीर्लज्जा ॥ ९३ ॥

दृढसिद्धिर्धृतिः ॥ ९४ ॥

निश्चितफलः फले निश्चयवान् । अथवा फलद्व×यमात्रे दृढां सिद्धिं मन्यमानो न हृष्येन्न विषीदेत् ॥ ९४ ॥

---

× शुभकर्मणः फलं लाभः । अशुभकर्मणः फलं हानिः । एतत्फलद्वयमित्यर्थः । तत्फलद्वयमनिश्चितमपि बलादापतत्येवेति मत्वा लाभे न हृष्येत्, हानौ न विषीदेत् । किंतु धैर्यमेवाभिलम्ब्य स्थितः स्यादिति तात्पर्यम् ।

अग्लानिः ॥ ९५ ॥

उत्साहसंपन्नः ॥ ९५ ॥

अक्रोधनः ॥ ९६ ॥

न कस्मैचित्कुप्येत ॥ ९६ ॥

समाहितः ॥ ९७ ॥

स्वस्थान्तःकरणः ॥ ९७ ॥

ब्रह्मचारी ॥ ९८ ॥

गतम् ॥ ९८ ॥

अनसूयः ॥ ९९ ॥

पराभ्युदयानुसंतापोऽसूया । तच्छीलो न स्यात् ॥ ९९ ॥

**सर्वं लाभमाहरन्गुरवे सायंप्रातरमत्रेण भिक्षाचर्यं चरेद्भिक्ष-माणोऽन्यत्रापपात्रेभ्योऽभिशस्ताच्च ॥ १०० ॥**

अपपात्राः प्रतिलोमजा रजकादयः । अपगतानि हि तेषां पात्राणि पाकाद्यर्थानि चातुर्वर्ण्यैः सह । अभिशस्तान्वक्ष्यति अथ पतनीयानीत्यादिना । तानुभयान्वर्जयित्वाऽ-न्यत्र भिक्षेत । तत्र च भिक्षमाणः सर्वं लाभं यच्च यावच्च लब्धं गोहिरण्यादि तत्सर्व-ममायया गुरव आहरेत् । एवमहरहः कुर्वन्सायंप्रातरमत्रेण न हस्तादिना भिक्षाचर्यं भिक्षाचरणं चरेत् कुर्यात् । सायंप्रातरिति वचनान्न सायंगृहीतेन प्रातराशो नापि प्रातर्गृहीतेन सायमाशः ॥ १०० ॥

अथ भिक्षाप्रत्याख्यानं निन्दितुं ब्राह्मणमाकृष्यते--

**स्त्रीणां प्रत्याचक्षाणानां समाहितो ब्रह्मचारीष्टं दत्तं हुतं प्रजां पशून्ब्रह्मवर्चसमन्नाद्यमिति वृङ्क्ते तस्माद्ु ह वै ब्रह्मचारिसंघं चरन्तं न प्रत्याचक्षी-तापि हैष्वेवंविध एवंव्रतः स्यादिति हि ब्राह्मणम् ॥ १०१ ॥**

व्याख्यातः समाहितः । समाहितो ब्रह्मचारी । याभिः स्त्रीभिर्भिक्षा प्रत्याख्यायते तासां प्रत्याचक्षाणानां स्त्रीणामिष्टं यागैरर्जितं धर्मदत्तं च दानैरर्जितं हुतं दर्विहोमैश्च गार्हैरर्जितं सर्वमेव धर्मं वृङ्क्ते आच्छिनत्ति । यस्मादेवं तस्माद्ब्रह्मचारिसंघं धर्मं चरन्तं न प्रत्याचक्षीत । उहवै इति निपातो वाक्यालंकारार्थः । अपिहि शब्दो

१ ख. °धं न ।

कदाचिदित्येवमर्थं द्योतयत. । एषु संश्रीभूतेषु ब्रह्मचारिषु कदाचिदेवंविधः समाहित एवंव्रतः स्यात् । अथ ब्रह्मचर्यविधिरित्यारभ्य यानि व्रतान्युक्तानि तैस्तद्वान्ब्रह्मचारी स्यात् । संभावने लिङ् । संभवेत् । तस्मान्न प्रत्याचक्षीतेत्येवं पैङ्ग्यब्राह्मणं भवति ॥ १०१ ॥

मानुमानेन भैक्षमुच्छिष्टं दृष्टश्रुताभ्यां तु ॥ १०२ ॥

भिक्षाणां समूहो भैक्षम् । न तच्छिष्टाभासेनोच्छिष्टं मन्तव्यं किंतु दृष्टश्रुताभ्यामेव दृष्टमात्मन. प्रत्यक्षम् । श्रुतमाप्तोपदेशः । ताभ्यामेव [न] तदुच्छिष्टमवगन्तव्यम् ॥१०२॥

भवत्पूर्वया ब्राह्मणो भिक्षेत ॥ १०३ ॥

ब्राह्मणो ब्रह्मचारी भवत्पूर्वया वाचा भिक्षेत । भवति भिक्षां देहीति ॥ १०३ ।

भवन्मध्यया राजन्यः ॥ १०४ ॥

भिक्षां भवति देहीति राजन्यो भिक्षेत ॥ १०४ ॥

भवदन्त्यया वैश्यः ॥ १०५ ॥

भिक्षां देहि भव+तीति ॥ १०५ ॥

सर्वं भ्रममाहरन्गुरव इत्युक्तम् । अथाऽऽहृत्य किं कर्तव्यमित्यत आह—

तत्समाहृत्योपनिधाय गुरवे प्रब्रूयाद्भैक्षमिदं भो इति ॥ १०६ ॥

तद्भैक्षं समाहृत्य समीपे निधायाऽऽचार्याय प्रब्रूयाद्भैक्षमिदं भो इति ॥ १०६ ॥

तेन प्रदिष्टं भुञ्जीत ॥ १०७ ॥

तेनाऽऽचार्येण प्रदिष्टं सौम्य त्वमेवं भुङ्क्ष्वेत्युक्तं भुञ्जीत ॥ १०७ ॥

विप्रवासे गुरोराचार्यकुलाय ॥ १०८ ॥

यदि गुरुर्विप्रोषितोऽसंनिहितः स्यात् तत आचार्यकुलायाऽऽचार्यस्य यत्कुलं भार्यापुत्रादि तस्मै प्रब्रूयात् । तेन प्रदिष्टं भुञ्जीत ॥ १०८ ॥

तैर्विप्रवासेऽन्येभ्योऽपि श्रोत्रियेभ्यः ॥ १०९ ॥

तैः सकुल्यैः सह गुरोर्विप्रवासेऽन्येभ्योऽपि श्रोत्रियेभ्यः प्रब्रूयात् । तैः प्रदिष्टं भुञ्जीतेति विपरिणामेनान्वयः । गौतमोऽप्याह—असंनिधौ तद्भार्यापुत्रसब्रह्मचारिभ्य इति ॥ १०९ ॥

---

+ ब्राह्मणादिना ब्रह्मचारिणा स्वसजातीयगृहेष्वेव भिक्षितव्यम् । तदुक्तं व्यासेन—ब्राह्मणक्षत्रियविड्वर्णेषु भैक्षमन्वहम् । सजातीयगृहेष्वेव सार्ववर्णिकमेव वा ॥ इति सा च भिक्षा पक्वान्नस्य सजातीयगृहेषु इत्यर्थः । कलौ क्षत्रविशोरभावात्तु पक्वान्नभिक्षायाः सार्ववर्णिकत्वप्रसक्तिः । सार्ववर्णिकभिक्षाया युगान्तरपरत्वमामान्नपरत्वं वा बोध्यम् ।

नाऽऽत्मप्रयोजनश्चरेत् ॥ ११० ॥

आत्मा प्रयोजनं प्रयोजको यस्य स आत्मप्रयोजनः । एवंभूतो भिक्षां न चरेत् । आत्मार्थं न चरेदित्यर्थः । अस्य प्रयोजनं यदा श्रोत्रिया अपि न लभ्यन्ते तदा प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीतेति वक्ष्यमाणप्रोषितविधिरप्रोषितेऽपि यथा स्यादिति ॥ ११० ॥

प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीत ॥ १११ ॥

प्रोषितशिष्य आचार्यप्रयोजनः स्वप्रयो*जनो वाऽऽचार्यकुलश्रोत्रियाभावे भिक्षातः किंचिदादायाग्नौ +प्रक्षिप्य भुञ्जीत ॥ १११ ॥

भुक्त्वा स्वयममत्रं प्रक्षालयेत् ॥ ११२ ॥

अमत्रं भोजनपात्रं भुक्त्वेति संनिधानात् । स्वयमेव प्रक्षालयेत् । भिक्षापात्रस्य त्वन्येनापि प्रक्षालने न दोषः । उभयोरपि पात्रयोर्ग्रहणमित्यन्ये ॥ ११२ ॥

न चोच्छिष्टं कुर्यात् ॥ ११३ ॥

यावच्छक्नोति भोक्तुं तावदेव भोजनपात्रे कृत्वा भुञ्जीत ॥ ११३ ॥

अशक्तौ भूमौ निखनेत् ॥ ११४ ॥

भोजने प्रवृत्तो यदि भोक्तुं न शक्नुयात्तद्धि तदन्नं भूमौ निखनेत् ॥ ११४ ॥

अप्सु वा प्रवेशयेत् ॥ ११५ ॥

प्रक्षिपेत् ॥ ११५ ॥

आर्याय पर्यवदध्याद्वा ॥ ११६ ॥

आर्यस्त्रैवर्णिकः । तस्मा अनुपनीताय पर्यवदध्यात् । सर्वमेकस्मिन्पात्रेऽवधाय तत्समीपे भूमौ स्थापयेत् ॥ ११६ ॥

अन्तर्धिने वा शूद्राय ॥ ११७ ॥

अन्तर्धानमन्तर्धिः । सोऽस्यास्तीत्यन्तर्धी । व्रीह्यादित्वादिनिः । अन्तर्धी दासः । अन्तर्हितं हि तस्य शूद्रत्वम् । आशौचेषु तु स्वामितुल्यत्वात् । प्रकरणादाचार्यस्येति गम्यते । आचार्यदासाय वा शूद्राय पर्यवदध्यात् ॥ ११७ ॥

अथ ब्रह्मचारिणो यज्ञं विधातुं हविरादीनि संपादयति—

---

* आत्मार्थमाचार्यार्थं वा प्रोषितः शिष्य इत्यर्थः । + श्रोत्रियाणां सद्भावेऽसद्भावे चेत्यादिः । अन्येभ्योऽपि श्रोत्रियेभ्य इत्येतदत्र न भवति । यदि स्यात्तत्रैवायं ब्रूयात्—तदभावेऽग्नौ कृत्वा भुञ्जीतेति । यद्यपि तत्राऽऽचार्यस्य विप्रवासः प्रकृतस्तथाऽपि न्यायसाम्याच्छिष्यप्रवासोऽपि भविष्यति ।

**भैक्षꣳ हविषा सꣳस्तुतं तत्राऽऽचार्यो देवतार्थे ॥ ११८ ॥**

भैक्षं हविष्ट्वेन संस्तुतं कीर्तितं तत्र तस्मिन्हविषि आचार्यो देवतार्थे देवकार्ये, तत्प्रीत्यर्थत्वात्तस्य ॥ ११८ ॥

**आहवनीयार्थे च ॥ ११९ ॥**

तस्य जठराग्नावाहूयमानत्वात् ॥ ११९ ॥

**तं भोजयित्वा यदुच्छिष्टं प्राश्नाति ॥ १२० ॥**

अनुवादेषु सर्वत्र विधिः प्रकल्प्यते । तं भोजयित्वा तस्योच्छिष्टं प्राश्नीयात् ॥ १२० ॥

**हविरुच्छिष्टमेव तत् ॥ १२१ ॥**

इडाभक्षणादिस्थानीयमित्यर्थः ॥ १२१ ॥

**यदन्यानि द्रव्याणि यथालाभमाहरति दक्षिणा एव ताः ॥ १२२ ॥**

यदन्यानि द्रव्याणि गवादीनि भिक्षाचरणे लब्धानि समिदादीनि च स्वयमाहृतानि यथालाभमाहरति ता दक्षिणा एव । दक्षिणासामानाधिकरण्यात्ता इत्युक्तम् ॥१२२॥

**स वा एष ब्रह्मचारिणो यज्ञो नित्यं प्रततः ॥ १२३ ॥**

स एष एवंभूतो यज्ञो ब्रह्मचारिणो नित्यं प्रतायते । एवंकुर्वता ब्रह्मचारिणा यज्ञा एव नित्यं क्रियन्त इत्यर्थः ॥ १२३ ॥

**न चास्मै श्रुतिविप्रतिषिद्धमुच्छिष्टं दद्यात् ॥ १२४ ॥**

अस्मै शिष्यायाऽऽचार्यः श्रुतिविप्रतिषिद्धं शास्त्रविप्रतिषिद्धमुच्छिष्टं न दद्यात् ॥१२४॥

किं पुनस्तत्—

**यथा क्षारलवणमधुमांसानीति ॥ १२५ ॥ (ख. ३)**

यथेति वचनाच्छ्रुतिविप्रतिषिद्धमिति लक्षणतः प्रतिषेधाच्च क्षारादिग्रहणमेवंविधस्योपलक्षणम् ॥ १२९ ॥ ( ख. ३ ) ।

**एतेनान्ये नियमा व्याख्याताः ॥ १२६ ॥**

अभ्यङ्गशेषो गन्धशेषो माल्यशेष इत्यादयस्तु प्रतिषिद्धा आचार्येण देया इत्युक्तमेवेति ॥ १२६ ॥

केचित्तु श्रुतिविप्रतिषिद्धमपि आचर्याशेषमुपयुञ्जाना दृश्यन्ते पूर्वैः पूर्वे आचारः प्रमाणमिति वदन्ति तन्निराकरोति—

**श्रुतिर्हि बलीयस्यानुमानिकादाचारात् ॥ १२७ ॥**

अनुमानाय प्रभवतीति आनुमानिकः । आचाराद्धि श्रुतिः स्मृतिर्वाऽनुमीयते । तस्मादानुमानिकादाचारात्प्रत्यक्षा श्रुतिर्बलीयसी तद्विरोधे नानुमातुं शक्यते । अनुमानमबाधित इति न्यायात् । एवं च ब्रुवता ब्रह्मचारिणः क्षारलवणादिप्रतिषेधः प्रत्यक्षब्राह्मणमूल इति दर्शितं भवति । यद्यपि क्षारलवणादिप्रतिषेधश्रुतेरुच्छिष्टव्यतिरेको विषयः संभवति तथाऽपि संकोचोऽपि तस्या अविशेषप्रवृत्ताया आनुमानिकादाचारादयुक्तः ॥ १२७ ॥

ननु परस्परविरुद्धा अपि श्रुतय उपलभ्यन्ते गृह्णाति न गृह्णातीति । तत्किमाचारात्संकोचिका श्रुतिर्नानुमीयते । अत आह—

**दृश्यते चापि प्रवृत्तिकारणम् ॥ १२८ ॥**

स्यादेवं यद्ययमाचारोऽगृह्यमाणकारणः स्यात् । गृह्यते तु कारणम् ॥ १२८ ॥

किं तत्-

**प्रीतिर्ह्युपलभ्यते ॥ १२९ ॥**

क्षारादिभोजने भुञ्जानस्य प्रीतिर्भवति । ततश्च यत्र प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्तीति न्यायान्न संकोचिका श्रुतिरनुमीयत इति ॥ १२९ ॥

**पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम्+ ॥ १३० ॥**

स्पष्टम् ॥ १३० ॥

**धर्मविप्रतिपत्तावभोज्यम् ॥ १३१ ॥**

यदि तयोर्धर्माद्विप्रतिपत्तिरपायो भवति ततो न भोज्यम् । यद्वा भुञ्जानस्य ब्रह्मचारिणो यदि धर्मो विप्रतिषिद्धो भवति मधुमांसादिमिश्रत्वेन ततो न भोज्यमिति ॥ १३१ ॥

**सायंप्रातरुदकुम्भमाहरेत् ॥ १३२ ॥**

आचार्यस्य स्नानपानाद्यर्थम् ॥ १३२ ॥

**सदाऽरण्यादेधानाहृत्याधो निदध्यात् ॥ १३३ ॥**

सदा प्रत्यहमरण्यान्न पित्रादिगृहादेधान् काष्ठानि आचार्यगृहे पाकाद्यर्थमाहरेत् । गतमेतद्गृह्ये । आहृत्याधो निदध्यात् । इदमपूर्वमधोनिधानमाचार्यस्य पुत्रादिषु बालेषु पतनशङ्कया । अपर आह--आत्मनः समिदाधानार्थमाहरणमिति तदनुवादेनाधोनिधानमभिधीयते दृष्टार्थमदृष्टार्थं चेति ॥ १३३ ॥

+ ब्रह्मचारिप्रकरणे नियमादिलर्थः ।

**नास्तमिते समिद्धारो गच्छेत् ॥ १३४ ॥**

अस्तमित आदित्ये समिध आहर्तुं न गच्छेत् । चोरव्याघ्रादिसंभवात् । समिद्धार इत्यण् कर्मणि चेति तुमर्थेऽण् प्रत्ययः ॥ १३४ ॥

**अग्निमिद्ध्वा परिसमुह्य समिध आदध्यात्सायं प्रातः यथोपदेशम् ॥ १३५ ॥**

परिसमूहनं परितो मार्जनम् । विप्रकीर्णस्याग्ने राशीकरणमित्यन्ये । यथोपदेशं यथा गृह्य उक्तं तथा समिध आदध्यात् । गृह्ये विहितमपि समिदाधानं विधीयते । सर्वधर्माचरणार्थं सायंप्रातरादिकान्विशेषान्वक्ष्यामीति च ॥ १३५ ॥

**सायमेवाग्निपूजेत्येके ॥ १३६ ॥**

एक आचार्याः सायमेवाग्निपूजा कार्या न प्रातरिति मन्यन्ते ॥ १३६ ॥

**समिद्धमग्निं पाणिना समूहेत्र समूहन्या ॥ १३७ ॥**

समिदाधानेन समिद्धमग्निं पाणिनैव समूहेन्न समूहन्या । समूहनी संमार्जनी दर्भनिर्मिता वेदाकृतिराचारात् ॥ १३७ ॥

**प्राक्तु याथाकामी ॥ १३८ ॥**

प्राक्तु समिदाधानात्परिसमूहने यथाकामी भवति । यथाकामस्य भावो यथाकामी । ष्यञ् । षित्त्वान्ङीष् ॥ १३८ ॥

**नाग्न्युदकशेषेण वृथाकर्माणि कुर्यान्नाचामेद्वा ॥ १३९ ॥**

अग्निपरिचर्यायां परिसमूहने परिषेचने च यदुपयुक्तमुदकं तच्छेषेण वृथा कर्माणि अदृष्टप्रयोजनरहितानि पादप्रक्षालनादीनि न कुर्वीत नाप्याचामेत् ॥ १३९ ॥

अवृथाकर्मत्वादस्य पुनः प्रतिषेधः—

**पाणिसंक्षुब्धेनोदकेनैकपाण्यावर्जितेन च नाऽऽचामेत् ॥ १४० ॥**

पाणिसंक्षुब्धं कुम्भादिगतं यत्पाणिना संक्षोभितं तेनोदकेन ना*चामेत् । अलाबुपात्रेण नालिकेरेण वा वैणवेन च मृन्मयेन वा ताम्रमयेन वा पात्रेण स्वयमाचमनमाचरन्ति शिष्टाः ॥ १४० ॥

* नेदं तटाकादिषु स्वयमाचमने । यदा चापर आचामयति तदैकेन पाणिना यदावर्जितमुदकं तेन नाऽऽचामेत् । किंतूभाभ्यां हस्ताभ्यां करकादि गृहीत्वा यदावर्जितमुदकं तेनाऽऽचामेत् । एवं च स्वयं वामहस्तेनाऽऽवर्जितेनापि नाऽऽचामेदिति तात्पर्यम् ।

**स्वप्नं च वर्जयेत् ॥ १४१ ॥**

पूर्वमदिवास्वापीत्यनेन दिवास्वापः प्रतिषिद्धः । अनेन तु रात्रावपि यावदाचार्यो न स्वपिति तावन्तं कालं स्वापः प्रतिषिध्यते । स्वप्नकथनं न कीर्तयेदित्यन्ये ॥ १४१ ॥

**अथाहरहराचार्यं गोपायेद्धर्मार्थयुक्तैः कर्मभिः ॥ १४२ ॥**

अथ स्वप्नस्य प्रकृतत्वात् । स्वप्नानन्तरं ब्राह्मे मुहूर्ते उत्थायेत्यर्थः । अहरहर्नित्यमाचार्यं गोपायेत् । किं दण्डादि गृहीत्वा नेत्याह—धर्मार्थयुक्तैः कर्मभिः । धर्मयुक्तानि कर्माणि समित्कुशपुष्पाहरणादीनि । अर्थयुक्तानि धनधान्याहरणादीनि ॥ १४२ ॥

**स गुप्त्यात्संविशन्ब्रूयाद्धर्मगोपायमाजूगुपमहामिति ॥ १४३ ॥**

स ब्रह्मचारी यावदुत्थानादारभ्य संवेशनादेवमाचार्यं गुप्त्यात् । संविशञ्शयनं भजन् धर्मगोपायमाजूगुपमहामिति मन्त्रं ब्रूयात् । धर्मं गोपायतीति धर्मगोपाय आचार्यस्तमहमाजूगुपमाभिमुख्येन रक्षि(क्षि)तवानस्मि । इदानीं संविशानीति मन्त्रस्यार्थः । अपर आह—हे धर्म गोपाय रक्ष माम् । यस्मादहमाजूगुपमाचार्यमेतावन्तं कालमिति ॥ १४३ ॥

**प्रमादादाचार्यस्य बुद्धिपूर्वं वा नियमातिक्रमं रहसि बोधयेत् ॥ १४४ ॥**

प्रमादोऽनवधानम् । प्रमादाद्बुद्धिपूर्वं वाऽऽचार्यस्य यो नियमातिक्रमस्तं रहसि बोधयेत् । इत्थमयं नियम आचार्यपादेनातिक्रम्यत इति ॥ १४४ ॥

**अनिवृत्तौ स्वयं कर्माण्यारभेत् ॥ १४५ ॥**

यदि बोधितोऽप्याचार्यो न निवर्तेत ततः स्वयमेतस्य कर्तव्यानि ब्रह्मयज्ञादीनि कर्माण्यारभेत कुर्यात् ॥ १४५ ॥

**निवर्तयेद्वा ॥ १४६ ॥**

प्रसह्य वा *स्वयं निवर्तयेत् ॥ १४६ ॥

**अथ यः पूर्वोत्थायी जघन्यसंवेशी भवति तमाहुर्न स्वपितीति ॥ १४७ ॥**

यः पूर्वमाचार्यादुत्तिष्ठति प्रतिबुध्यते । जघन्यशब्दः पश्चादर्थे । जघन्यश्च संविशति तं ब्रह्मचारिणं न स्वपितीति धर्मज्ञा आहुः । प्रयोजनं स्वप्नं वर्जयेदिति यदुक्तं तस्यायमर्थः । न स्वापस्यात्यन्ताभाव इति । अथशब्दश्च वाक्योपक्रमे ॥ १४७ ॥

**स य एवं प्रणिहितात्मा ब्रह्मचारी अत्रैवास्य सर्वाणि फलवन्ति कर्माण्यवाप्तानि भवन्ति यान्यपि गृहमेधे ॥ १४८ ॥**

* स्वयमित्युपलक्षणम् । स्वसामर्थ्याभावे पित्रादिभिर्वा निवर्तयेदित्यर्थः

इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (धर्मसूत्रापरपर्याये) षड्विंशप्रश्ने प्रथमः पटलः ॥ १ ॥ ( ख० ४ ) ॥

आचार्याधीनः स्यादित्यारभ्य यस्य नियमा उक्ताः स ब्रह्मचारी एवमुक्तेन प्रकारेण प्रणिहितात्मा प्रकर्षेण निहित आचार्यकुले स्थापित आत्मा येन स तथोक्तः । प्रकर्षश्चाऽऽन्तात्तत्रैव शरीरन्यासः । वक्ष्यति चाऽऽचार्यकुले शरीरन्यास इति । अस्यैवंविधस्य ब्रह्मचारिणोऽत्रैव ब्रह्मचर्याश्रमे सर्वाणि फलवन्ति ज्योतिष्टोमादीनि कर्माणि अवाप्तानि भवन्ति तत्फलावाप्तिरेवैतदवाप्तिः । यान्यपि कर्माणि गृहमेधे गृह्यशास्त्रे विवाहादीनि अष्टकान्तानि तान्यप्यवाप्तानि भवन्ति । तदेवं नैष्ठिकब्रह्मचारिविषयमिदं सूत्रम् ॥ १४८ ॥ ( ख० ४ ) ॥

इति श्रीमन्महादेवदीक्षितविरचितायां सत्याषाढहिरण्यकेशिश्रौतसूत्रे धर्मसूत्रव्याख्यायामुज्ज्वलायां वृत्तौ षड्विंशप्रश्ने प्रथमः पटलः ।

---

अथ द्वितीयः पटलः ।

नियमेषु तपःशब्दः ॥ १ ॥

आचार्याधीनः स्यादित्यादयो नियमा उक्ता अस्मिन्ब्रह्मचारिप्रकरणे तपःशब्दस्तेषु द्रष्टव्यो न कृच्छ्रादिषु ॥ १ ॥

तदतिक्रमे विद्याकर्म निःस्रवति ब्रह्म सहापत्यादेतस्मात् ॥ २ ॥

तेषां नियमानामतिक्रमे विद्याकर्म विद्याग्रहणं ब्रह्म निःस्रवति गृहीतं वेदं निःसारयति । एतस्मान्नियमातिक्रमेणाध्येतुः पुरुषान्न केवलादेवैतस्मात् । किं तर्हि सहापत्यादपत्येन सह वर्तत इति सहापत्यः । वोपसर्जनस्येति समावाभावे रूपम् । अपत्यादपि ब्रह्म निःसारयति । यद्यप्यपत्यं नियमातिक्रमकारि न भवति तथाऽपि पितृदोषादेव ततोऽपि ब्रह्म निःसरति नियमातिक्रमेण विद्याग्रहणं कुर्वतः पुरुषात्सहापत्याद्गृहीतं ब्रह्म निःसरति । ब्रह्मयज्ञादिषु प्रयुज्यमानमपि अकिंचित्करं भवतीत्यर्थो विवक्षितः । स्रवतेश्च सकर्मकस्य प्रयोगो भाष्ये दृष्टः स्रवत्युदकं कुण्डिकेति । अपर आह तदतिक्रमेऽविद्याकर्मनियमातिक्रमेण विद्याग्रहणं न कर्तव्यम् । कुतः । यतो निःस्रवति ब्रह्म निःसरतीत्यर्थः । शेषं समानमिति । विद्याकर्म पतिष(रिस्र)वति ब्रह्म च निःस्रवतीत्यन्ये । कुर्वत इति चाध्याहार्यं तदतिक्रमेण विद्याकर्म कुर्वतो ब्रह्म निःस्रवतीति ॥ २ ॥

न केवलमकिंचित्करं नियमातिक्रमेण विद्याग्रहणं प्रत्युतानर्थकमित्याह—

कर्तृपत्यमनायुष्यं च ॥ ३ ॥

कर्तृशब्देन खड्गाभिधायिना नरको लक्ष्यते । पततयनेनेति पत्यम् । एवंभूतं विद्याग्रहणं नरकहेतुर्भवति । अनायुष्यं चानायुष्करं च ॥ ३ ॥

तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात् ॥ ४ ॥

अत एवावरेषु अर्वाचीनेषु कलियुगवर्तिषु योनिषु न जायन्ते मन्त्रदृशो न भवन्ति । नियमातिक्रमस्येदानीमवर्जनीयत्वात् ॥ ४ ॥

कथं तर्ह्यद्यतना अतिक्रामन्तोऽपि नियमानल्पेनैव यत्नेन चतुरो वेदान् गृह्णन्ति । युगान्तरे सम्यगनुष्ठितस्य नियतकर्मणः फलशेषेणेत्याह—

*श्रुतर्षयस्तु भवन्ति केचित्कर्मफलशेषेण पुनःसंभवेऽपि ॥ ५ ॥

पुनःसंभवः पुनर्जन्म ॥ ५ ॥

अत्रोदाहरणम्—

अथ यथा श्वेतकेतुः ॥ ६ ॥

श्वेतकेतुरल्पेनैव कालेन चतुरो वेदाञ्जग्राह । तथा च च्छान्दोग्यम्—श्वेतकेतुर्हाऽऽरुणेय आस तँ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं,न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति । स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयायेति ॥ ६ ॥

एवं नियमातिक्रमे दोषमुक्त्वा तदनुष्ठाने सिद्धिमाह—

यत्किंच समाहितोऽब्रह्माXप्याचार्यादुपयुङ्क्ते ब्रह्मवदेव तस्मिन्फलं भवति ॥ ७ ॥

अब्रह्मापि पररूपं कतन्तवत् । अपेर्वाऽकारलोपः । पिहितपिनद्धादिवत् । वेदव्यतिरिक्तमपि यत्किंचिद्विषमन्त्रादिकं समाहितो नियमवान्भूत्वाऽऽचार्यादुपयुङ्क्ते गृह्णाति तस्मिन्ब्रह्मवदेव फलं भवति ॥ ७ ॥

निग्रहानुग्रहशक्तिरप्यस्य भवतीत्याह—

अथो यत्किंच मनसा वाचा चक्षुषा वा संकल्पयन्ध्यायत्याहाभिविपश्यति वा तथैव तद्भवतीत्युपदिशन्ति ॥ ८ ॥

---

* [illegible]श्रुतर्षय उच्यन्ते X पररूपं कतन्तवदपेर्वाऽकारलोपः । पिहितपिनद्धादि[illegible]अप्याचार्यादिति पाठ उज्ज्वलाकृतोऽग्र आसीदित्यनुमीयते । युक्तायुक्तं सदसद्विचारणीयम् ।

अथो अपि च यत्किंच निग्रहात्मकमनुग्रहात्मकं वा संकल्पयंश्चिकीर्षन्मनसा निन्दितेन शिवेन वा ध्यायतीत्थमिदमस्यास्त्विति तथैव तद्भवति। एवं यत्किंच संकल्पयंश्चक्षुषा पौरा(घोरे)ण मैत्रेण वाऽभिविपश्यति तथैव तद्भवतीत्युपदिशन्ति धर्मज्ञाः ॥८॥

अवश्यं धर्मयुक्तेनाध्येतव्यमित्युक्तम्। इदानीं धर्मो लक्षणतस्त्रिधेत्याह—

**गुरुप्रसादनीयानि कर्माणि स्वस्त्ययनमध्ययनसंवृत्तिरिति ॥ ९ ॥**

यैरनुष्ठितैर्गुरुः प्रसीदति तानि गुरुप्रसादनीयानि पादप्रक्षालनादीनि। स्वस्तीत्यविनाशनाम तत्प्राप्तिसाधनं स्वस्त्ययनम्। तच्च त्रिविधम्। दृष्टार्थमदृष्टार्थमुभयार्थं चेति। दृष्टार्थं बाहुनदीतरणादिनिषेधः। अदृष्टार्थं क्षारादिनिषेधः। उभयार्थं भिक्षाचरणादीनि। अध्ययनसंवृत्तिरधीतस्य वेदस्याभ्यासः ॥ ९ ॥

**अतोऽन्यानि निवर्तन्ते ब्रह्मचारिणि ॥ १० ॥**

कर्माणीति शेषः। एतेभ्योऽन्यानि कर्माणि निवर्तन्ते। ब्रह्मचारिणा न कर्तव्यानीत्यर्थः ॥ १० ॥

**स्वाध्यायधृग्धर्मरुचिस्तपस्व्यृजुर्मृदुः सिध्यति ब्रह्मचारी ॥११॥**

स्वाध्यायधृक्। अधीतस्य स्वाध्यायस्य धारयिताऽविस्मर्ता। धर्मे रुचिर्यस्यासौ धर्मरुचिः। तपस्वी नियमेषु तपःशब्द इति तद्वान्। ऋजुरमायावी। मृदुः क्षमावान्। एवंभूतो ब्रह्मचारी सिध्यति सिद्धिं प्राप्नोति। उक्ता सिद्धिः। अथो यत्किंच मनसेत्यत्रोक्तानां पुनर्वचनमादराय। तदनुष्ठाने फलभूमाऽतिक्रमे च दोषभूमेति ॥११॥

**सदा महान्तमपररात्रमुत्थाय गुरोस्तिष्ठन्प्रातरभिवादयी(ये)तासावहं भो इति ॥ १२ ॥**

सदा प्रतिदिनं महान्तमपररात्रेः पश्चिमयाममुत्तिष्ठन्नुत्थाय च समीपे तिष्ठन्गुरोः प्रातरभिवादयी(ये)ताभिवादयेऽसावहं भो इति ब्रुवन्। असावित्यात्मनो नामनिर्देशः। यथाऽभिवादये यज्ञशर्माऽहं भो इति ॥ १२ ॥

**समानग्रामे च वसतामन्येषामपि वृद्धतराणां प्राक्प्रातराशात् ॥ १३ ॥**

अन्येषामपि वृद्धतराणां प्राक्प्रातराशात्प्रातर्भोजनात्प्राक्समानाभिवादनमभिवादयी(ये)त ते चेत्समानग्रामे वसन्ति ॥ १३ ॥

१ ख. °दमभिवादयी°।

प्रोष्य च समागमे ॥ १४ ॥

यदा स्वयं प्रोष्य चाऽऽगत आचार्यादयो वा तदाऽप्यभिवादयी(ये)त। इदं नैमित्तिकं पूर्वं नित्यम् ॥ १४ ॥

अथ काम्यम्—

स्वर्गमायुश्चेप्सन् ॥ १५ ॥

अभिवादयी(ये)तेत्येव ॥ १५ ॥

अभिवादनप्रकारं वर्णानुपूर्व्येणाऽऽह—

दक्षिणं बाहुꣳ श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीतोरःसमꣳ राजन्यो मध्यसमं वैश्यो नीचैः शूद्रः ॥ १६ ॥

ब्राह्मणोऽभिवादयमान आत्मनो दक्षिणं बाहुं श्रोत्रसमं प्रसार्याभिवादयी(ये)तोरःसमं राजन्यो दक्षिणं बाहुं प्रसार्याभिवादयी(ये)तेति गम्यते। एवमुत्तरयोरपि । मध्यसममुदरसमं वैश्यः । ऊरुसममित्यन्ये । नीचैः पादसमं शूद्रोऽभिवादयी(ये)त ॥ १६ ॥

प्राञ्जलिः ॥ १७ ॥

प्राञ्जलिर्यथा भवति तथाऽभिवादयी(ये)त । अञ्जलिं कृत्वेत्यर्थः। प्रा(सा)ञ्जलिरिति तु युक्तः पाठः ॥ १७ ॥

प्लावनं च नाम्नोऽभिवादने पूर्वेषां वर्णानाम् ॥ १८ ॥

अभिवादनस्य यत्प्रत्यभिवादनं तत्राभिवादयितुर्नाम्नः प्लावनं कर्तव्यम्। प्लुतः कर्तव्य इत्यर्थः। पूर्वेषां वर्णानां शूद्रवर्जितानाम् । प्रत्यभिवादेऽशूद्र इति पाणिनिस्मृतिः। तत्र वाक्यस्य टेरनुवृत्तेः। प्रत्यभिवादवाक्यस्यान्ते नामयोगः। तस्य टेः प्लुतः। आयुष्मान्भव सौम्य ३ इति प्रयोक्तव्यम् । स्मृत्यन्तरवचनान्नाम्नश्च पश्चादकारः । तथा च मनुः—

आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥ इति ।

आयुष्मान्भव सौम्य देवदत्त३ अ इति प्रयोगः। शंभुर्विष्णुश्चक्रपाणिरित्येवमादीनां नाम्नां संबुद्धौ गुणे कृते 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' इत्ययमपि विधिर्भवति । अन्ते अकारः । तयोर्य्वावचि संहितायामिति यकारवकारौ च भवतः । शंभा३व विष्णा३व चक्रपाणा३य इति । प्रत्यभिवादने चेति चकारस्यार्थं न पश्यामः । तस्मादनर्थक एव चकारः । अनर्था अपि निपाताः प्रयुज्यन्ते ॥ १८ ॥

उदित आदित्य आचार्येण समेत्योपसंग्रहणम् ॥ १९ ॥

उदिते त्वादित्य आचार्येणाध्ययनार्थं समेत्य वक्ष्यमाणविधिनोपसंग्रहणं कुर्यात्॥१९॥

सदैवाभिवादनम् ॥ २० ॥

अन्यदा सर्वदा पूर्वोक्तप्रकरेणाभिवादनमेव । अयमनुवाद उत्तरया विवक्षया ॥२०॥

उपसंग्राह्य आचार्य इत्येके ॥ २१ ॥

अभिवादनप्रसङ्गे सदैवोपसंग्राह्य आचार्य इत्येके ॥ २१ ॥

किमिदमुपसंग्रहणं तदाह—

दक्षिणेन पाणिना दक्षिणं पादमधस्तादभिमृश्य
सकुष्ठिकमुपसंगृह्णीयात् ॥ २२ ॥

आत्मनो दक्षिणेन पाणिनाऽऽचार्यस्य दक्षिणं पादमधस्तादभिमृश्य । अधःशब्द उपरिभावे । अधस्ताच्चोपरिष्टाच्चाभिमृश्य सकुष्ठिकं सगुल्फम् । साङ्गुष्ठमित्यन्ये । उपसंगृह्णीयात् । इदमुपसंग्रहणम् । एतत्कुर्यात् । ॥ २२ ॥

उभाभ्यामेवोभावभिपीडयत उपसंग्राह्यावित्येके ॥ २३ ॥

उभाभ्यामेव पाणिभ्यामुभावेवाऽऽचार्यस्य पादावभिपीडयतो माणवकस्योपसंग्राह्यावित्येके मन्यन्ते । अभिपीडयत इति कृत्यानां कर्तरि वेति षष्ठी । अत्र मनुः—

> व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
> सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥

इति ॥ २३ ॥

सर्वाह्णꣳ सुयुक्तोऽध्ययनादनन्तरोऽध्याये ॥ २४ ॥

सर्वं च तदहश्चेति सर्वाह्णम् । राजाहःसखिभ्यष्टच् । अह्नोऽह्न एतेभ्य इत्यह्नादेशः । अह्नोऽदन्तादिति णत्वम् । अत्यन्तसंयोगे द्वितीया । सर्वाह्णं तदा सुयुक्तः सुसमाहितोऽनन्यचित्तः । अध्ययनादनन्तरः । नान्तरयतीत्यनन्तरः । अध्ययनाद्यथा नाऽऽत्मानमन्तरयति यथाऽध्ययनान्न विच्छिद्यते तथा स्यात् अध्याये स्वाध्यायकाले । अध्याय इत्यनुवादः ॥ २४ ॥

तथा गुरुकर्मसु मनसा चानध्याये ॥ २५ ॥

मनसा चानध्याय इति विशेषाभिधानादनध्याय इति प्रायेण पठन्ति । तत्र नकारश्छान्दसोऽपपाठो वा । गुरुकर्मसु तथा स्यात् सुयुक्तोऽनन्तर एव स्यादनध्याये ॥ २५ ॥

आहूताध्यायी च स्यात् ॥ २६ ॥ ( ख० ५ ) ।

आचार्येणाऽऽहूतोऽधीयीत । नाध्ययने स्वयं प्रवर्तयेत् ॥ २६ ॥ ( ख० ५ ) ।

सदा निशायां गुरुꣳ संवेशयेत्तस्य पादौ प्रक्षाल्य
संवाह्यानुज्ञातः संविशेत् ॥ २७ ॥

सदा प्रत्यहं निशायामतिक्रान्ते प्रदोषे संवेशयेत् । कथम् । गुरोः पादौ प्रक्षाल्य संवाह्य च । संवाहनं पादतले हस्तेन मर्दनम् । अनुज्ञातः संविशेत् । गुरुणाऽनुज्ञातः स्वयं संविशेत् । शयीत ॥ २७ ॥

न चैनमभिप्रसारयीत ॥ २८ ॥

एनमाचार्यं प्रति पादौ न प्रसारयेत् ॥ २८ ॥

न खट्वायाꣳ सतोऽभिप्रसारणमस्तीत्येके ॥ २९ ॥

यदा तु गुरुः खट्वायां निशि शेते तदा तं प्रति पादयोः प्रसारणं न दोषायेत्येके मन्यन्ते । स्वपक्षस्तु तत्रापि दोष इति ॥ २९ ॥

न चास्य सकाशे संविष्टो भाषेत ॥ ३० ॥

तस्याऽऽचार्यस्य सकाशे स्वयं संविष्टः शयानो नाभिभाषेत । कार्यावेदनादावुत्थायैव भाषेत ॥ ३० ॥

अभिभाषितस्त्वासीनः प्रतिब्रूयात् ॥ ३१ ॥

आचार्येणाभिभाषित आसीनस्तु प्रतिब्रूयात् । एतदाचार्ये आसीने शयाने वा ॥ ३१ ॥

अनूत्थाय तिष्ठन्तम् ॥ ३२ ॥

यदा त्वाचार्यस्तिष्ठन् ब्रूते तदा तमनूत्थाय प्रतिब्रूयात् ॥ ३२ ॥

गच्छन्तमनुगच्छेद्धावन्तमनुधावेन्न सोपानद्वेष्टितशिरा अवहित-
पाणिर्वाऽऽसीदेत् ॥ ३३ ॥

अनुधावेदित्यन्तं स्पष्टार्थम् । उत्तरत्रोपानत्प्रतिषेधान्न सोपानदित्यनुवादोऽध्वापन्नास्त्विति प्रतिवेदितुम् । आचार्यसमीपे न सोपानत्क आसीदेत् । अपि वा वेष्टितशिरा अवहितपाणिर्दात्रादिहस्त एवंभूतोऽपि नाऽऽसीदेत् ॥ ३३ ॥

अध्वापन्नस्तु कर्मयुक्तो वाऽऽसीदेत् ॥ ३४ ॥

अध्वानं प्राप्तोऽध्वापन्नः । कर्मणि दात्रादिसाध्ये प्रवृत्तः कर्मयुक्तः । एवंभूतस्तु सोपानत्कादिकोऽप्यासीदेत् ॥ ३४ ॥

भार्यायां प्रोषितायां चेदुदेत्यर्कोऽस्तमेति वा ।
तत्र स्यात्पुनराधेयमन्ये प्राहुरिहान्यथा ॥ इति ॥

भार्यायामित्यादिना सा चोपेक्षा च प्रवासादीति पूर्वोक्तलक्षणा । आदिपदात्पत्नी-सीमाद्यतिक्रमणादि । भार्यायां पत्न्यां प्रोषितायां प्रकर्षेणोषिता प्रोषिता । तस्यां महा-सीमामतीत्यानतीत्य वाऽन्यत्राग्निशालातो गतायामर्कश्चेदुदेति वाऽस्तमेति चेत्तत्र तस्मि-न्निमित्ते पुनराधेयं भवति । अन्य आचार्या इहैतादृक्स्थलेऽन्यथा प्राहुः । अत्र सीमा-शब्देन गृहसीमा युक्ता । तदुक्तं छन्दोगपरिशिष्टे—

विहारकाले यदि कार्यलोभात्पत्नी तु सीमानमतीत्य गच्छेत् ।
निःसंशयोऽग्निः खलु नाशमेति गृहस्य सीमाऽत्र विवक्षितोऽर्थः ॥ इति ।

एकभार्यकविषयमिदमिति वदन्ति । तदुक्तं यज्ञपार्श्वादौ—

पत्न्याः प्रवासविषये पुनराधिरुदाहृता ।
वाक्यैर्मनीषिभिः प्रोक्तैरेकभार्यस्य सेष्यते ॥ इति ।

तत्र प्रवासो नाम—

यदि सीमामतिक्रम्य रात्रौ तत्रैव वत्स्यति ।
अगृहस्य प्रयाणं यत्प्रवास उच्यते बुधैः ॥ इति ।

अत्र सीमाशब्देन गृहग्रामसीमोच्यते । तेनाग्निगृहं विहाय स्वग्रामेऽन्यग्रामे वा रात्रौ वासः प्रवासः । रात्रिपदमुदयास्तमयकालोपलक्षकम् । मूलैकवाक्यतानुरोधात् ।

यत्तु नारायणेनोक्तं ग्रामात्स्वाग्निसमन्वितात् ।
सीमामतीत्य चेद्रात्रौ वासः प्रवसनं स्मृतम् ॥
एकाकिनी यदा पत्नी कदाचिद्ग्राममाव्रजेत् ।
होमकालेऽमिसंप्राप्ता न सा दोषेण युज्यते ॥
अथ तत्रैव निवसेद्ग्रामं गत्वा प्रमादतः ।
लौकिकाग्निः स विज्ञेय इत्येषा नैगमी श्रुतिः ॥

इति वचनाद्ग्रामान्तरे रात्रौ वासः प्रवासः । तेन स्वग्रामे पत्न्या रात्रौ वासे न दोषः । अत्रापि रात्रिपदमुदयास्तमयोपलक्षकम् । अन्यथा सायं होमानन्तरं गमन उदयात्प्राक्परावृत्तौ पुनराधानप्रसक्तः स्यात् । रात्रिवाससद्भावात् । अपि च रात्र्य-हर्वासयोरविशेषात् । यद्देवमिश्रादिग्रन्थे—

ग्रामान्तरे नगर्यां वा पत्न्यां वाऽन्यत्र वा क्वचित् ।
सीमामतीत्य चेद्रात्रौ वासः प्रवसनं स्मृतम् ॥ इति ।

तत्पूर्वोक्तप्रवासलक्षणवाक्यैकवाक्यतया व्याख्येयम् । तादृशस्यैवार्थस्योपलब्धेर्न लक्षणान्तरमिति ।

ननु—प्रवसेद्धनसंपत्त्यै न तीर्थाय कदाचन ।
इति कूर्मपुराणोक्तं तथा बौधायनेन च ॥

इति बौधायनीयाद्धनार्जनस्य प्रवासप्रयोजकत्वात्पत्न्यास्तु तदभावात्कथं तत्प्रसक्तिः । त्रय एवाधनाः स्मृता इति स्मृतेश्चेति चेन्न । अस्ति चास्या अपि धनवत्ता । संभाव्यते च तद्द्वारा धनसमृद्धिर्लोके । स्त्रीधनानि षडिति स्मृतेः । किंच भवति हि पितृमातृभ्रातृपुत्रदर्शनेन धनोपलब्धिः । 'दत्तं स्वसृदुहितृभ्यामनन्तफलदं भवेत्' इति । दानकाण्डे दक्षोक्तेः । दीयते च दूरादागताभ्यः स्वसृप्रभृतिभ्यो वासःप्रभृति । यत्त्व-ना(या) इत्युक्तं तदस्वातन्त्र्यपरतया व्याख्येयम् । अत एव नाभ्युपस्थानमिति वचनम् । एतच्चोपस्थिते यजमानवत्पत्न्या अपि प्रवासे यदि करोति तदाऽनेन भार्यायां प्रोषिता-यामिति वाक्येन स निषिध्यते । अतो बहुभार्यस्यैकभार्यस्य वा पत्न्याः प्रवासे पुनरा-धानमेवेति मूलकाराः । इदमेकभार्यकविषयं न तु बहुभार्यकविषयमित्यन्ये । तत्र स्यात्पु-नराधानमिति कुत्रचित्पाठः । युक्त एवायम् ।

अनेकपत्नीकस्यैकपत्नीकस्य वा नियतपत्नीप्रवासे स्वोक्तस्य पुनराधेयस्य मतान्त-रेण पत्नीनियममाह—

ज्येष्ठा चेदग्निसंयुक्ता गच्छन्त्यन्या यथारुचि ।
यजमानेन सहिता यद्वा ता एव केवलाः ॥

ज्येष्ठा पत्न्यग्निसंयुक्ता चेत् । संयुक्तशब्दः सामीप्यवचनः । मुख्यार्थासंभवात् । अन्याः कनिष्ठाः । यथारुचि क्रियाविशेषणमिदम् । यथेच्छमुदयास्तमयकालपर्यन्तमपि गच्छन्ति । दोषाभावज्ञापनार्थं लट् । गच्छन्त्वन्या इति लोडन्तोऽपि क्वचित्पाठः । 'बहुभार्यस्य ज्येष्ठा चेत्प्रवसेत्पुनराहितिः' इति वाक्यान्तरात् । कीदृश्योऽन्याः । यजमानेन भर्त्रा सहिताः । यद्वा केवला यजमानरहिताः । ता एव यवीयस्यो यथाकामं गच्छन्तु । तेन ज्येष्ठासंनिधाने भर्तुः संनिधाने सत्यप्यसति चेतरासां प्रवासो निमित्तं न भवतीति भावः । अत्र ज्येष्ठाप्रवास एव पुनराधाननिमित्तमिति पूर्वस्माद्भेदः ।

कदाचित्त्वनिष्ठासहकृतप्रवासयष्टुः कतिचिन्नियमान्प्रसङ्गादाह—

प्रोषितः स्यादधःशायी ऋतुगामी त्वमैथुनम् ।
वदन्बौधायनस्त्वेवमेका चेदग्निसंनिधौ ॥

इतरासां यथाकामं प्रवासमनुमन्यते ।
इत्युक्तं भवभाष्येऽपि तातश्लोकेष्वपीरितम् ॥

प्रोषितः पत्नीसहितकृतप्रवासोऽधःशायी स्यात् । अधःशब्देनाग्निस्थानाज्जीचत्व-मुच्यते खट्वाद्युदासार्थं न त्वास्तरणनिषेधार्थम् । ऋतुपायी स्यात् । ऋतौ पीयतेऽसौ ऋतुपायी । ऋतुजायोपयायी स्यात् । तु यस्मादमैथुनं मैथुननिषेधः प्रोक्त इति शेषः । यद्वा ; ऋतुगमनममैथुनं प्रोक्तमिति । उक्तं चर्तुगमनस्यामैथुनत्वं दानधर्मेषु भीष्मयुधि-ष्ठिरसंवादे ।

अधुना ज्येष्ठाया अपि प्रवासे बौधायनमतेन दोषाभावमाह—वदन्निति । बौधायनस्त्वेका कनिष्ठा ज्येष्ठा वाऽग्निसंनिधौ चेद्ध्रियत एवं वदन्नितरासामन्यासां यथाकामं यथारुचि प्रवासमनुमन्यते । अत एव ज्येष्ठाप्रवासेऽपि न पुनराधानमिति देवयाज्ञिकग्रन्थे संग्रहवचनं—

ज्येष्ठा चेद्बहुभार्यस्य ह्यतिचारेण गच्छति ।
पुनराधानमत्रैक इच्छन्ति न तु सूरयः ॥

इति संगच्छते । ज्येष्ठाप्रवासेऽपि दोषाभावस्य प्राशस्त्यं सूरिपदाद्विज्ञायते न तु गौतमः, इति मिश्रग्रन्थधृतवैकल्पिकपाठसमाश्रयणे ज्येष्ठाप्रवासे पुनराधानं स्यान्न वेति विकल्पः । तथा च बहुभार्यस्यान्यतरपत्नीसंनिधाने पुनराधानं नेति पूर्वस्माद्भेदः ।
एतदेव बहुवादिसंमत्या द्रढयति—इत्युक्तमिति । भवभाष्यसंज्ञके ग्रन्थेऽपीत्यनेनैव प्रकारेणोक्तम् । तथा तातश्लोकेष्वपि कारिकास्वपीरितमुक्तमिति ।

अधुनैकभार्यस्यानेकभार्यस्य वा स्वामिनोऽग्निसंनिधाने सर्वथैव पुनराधानं नेत्यप-रमतेनाऽऽह—

एकस्यामप्यतिष्ठन्त्यामग्निहोत्रसमीपतः ।
पतिस्तिष्ठति चेदग्निनाशो नेत्यपरे विदुः ॥

एकस्यामपि ज्येष्ठकनिष्ठान्यतरपत्न्यामप्यग्निहोत्रसमीपतः । समीप इत्यर्थः । अति-ष्ठन्त्यामविद्यमानायां सत्यां पतिः स्वामी चेत्तिष्ठति विद्यते । अग्निहोत्रसमीपत इत्य-नुषज्यते । चेन्नाशोऽग्निनिष्ठसंस्कारनाशो नेत्यपर आचार्या विदुरिति ।

( अत्र रुद्रदत्तरामाण्डारभाष्यपर्यालोचनयाऽनेकभार्यस्यैकभार्यस्य वा प्रवासो भवति तत्रैव पूर्वं पूर्वपक्षीकृत्य पत्न्यास्तुल्यस्वामित्वं बाधित्वाऽकृत्स्नमापाद्य तत्समर्थं पुंस्त्वविशिष्टचोदनाभिधानपूर्विका कल्पान्तरोक्तिः प्रदर्शिता । तदर्थमेव दाशरथिर्भ

कण्वादीनां महत्तमानामाचारं दर्शयित्वाऽऽपस्तम्बश्रौतसूत्राचार्योपसंहृतम् । तस्मात्सिद्ध-मभावेऽपि पत्न्या न कर्मणो निवृत्तिरिति । एवमेव चतुर्वेदभाष्यकारमहमास्कराद्यैरपि कर्मजन्यफलेच्छावत्पत्न्यास्तुल्याधिकारोऽन्यथा पात्राज्यव्रीहियवपत्न्यादिवदङ्गत्वमुक्तम् ) । सर्वासामसंनिधानेऽपि न पुनराधानमिति बौधायनमतात्पूर्वमतादपि च भेदः ।

इदानीमसमुद्रगामिनी विषयमाह—

पत्न्यन्तरेऽथ वा पत्यौ हुताशनसमीपगे ।
अन्या पत्नी यथाकाममतिक्रामेन्नदीमपि ॥
न कुर्युरग्न्युपस्थानं प्रवसन्त्योऽपि योषितः ।
प्रोषिता न जपं कुर्युरश्नन्त्येव सधर्मकम् ॥
आगतोपस्थितिं चापि स्त्रीणां नेच्छन्ति सूरयः ॥ इति ।

पत्न्यन्तरे ज्येष्ठाकनिष्ठयोरन्यतरस्यामथवा पत्यौ हुताशनोऽग्निस्तस्य समीपगे सति पत्नी यथाकामं यथेच्छं नदीमप्यतिक्रामेन्न दोष इति यावत् । एतेन पतिपत्न्यन्यतर. संनिधाने समुद्रगातिक्रमेण पुनराधानमितरस्यास्त्वतिक्रमेणोभयोरसंनिधाने पुनराधानं संनिधाने नेति भावः । अत्र पत्नीग्रहणात्सीमातिक्रमणे प्रवासे वा यजमानेन कृते न दोष इति । तथा—

रजोदोषे समुत्पन्ने सूतके मृतकेऽपि वा ।
प्रवसन्नग्निमान्विप्रः पुनराधानमर्हति ॥
बह्वीनामपि चैकस्यामुदक्यायां तु न व्रजेत् ।
एकादशे चतुर्थेऽह्नि गन्तुमिच्छेत्रिमिततः ॥
त्रयीमुक्त्वा तु यो लोभात्प्रवसेत्पर्वसंधिषु ।
करोति पुनराधानं प्रायश्चित्तमृणाहते ॥
नाग्निकार्यस्य वेलायां प्रवसेन्न च पर्वणि ।
न विना च निमित्तेन क्रीडाद्यर्थस्तु न व्रजेत् ॥
प्रवसेद्धनसंपत्त्यै न तीर्थाय कदाचन ।
इति कूर्मपुराणोक्तं तथा बौधायनेन च ॥
सहाग्निर्वा सपत्नीको गच्छेत्तीर्थानि मानवः ।
पुराणवचनात्साग्नेः प्रवासोऽस्तीति केचन ॥

इत्यादिवचनैरेतद्व्यतिरिक्तस्थले बोध्यम् । पूर्वोक्तमतभेदे ज्येष्ठायाः कनिष्ठाया वा प्रवा. ऽपस्थितौ तुल्य एवाधिकारः स्यादिति स्वयमेव साधिते तुल्याधिकारे यजमानवत्प्रवासोः पस्थानादिकं स्यादुत आह नेति । प्रवसन्त्योऽपि योषितोऽग्न्युपस्थानं न कुर्युः । प्रोषिता-

सत्यः अपं त्यागोपस्थानरूपं न कुर्युः । तर्हि कर्मजन्यफलभोक्तृत्वं न स्यादत आह— सधर्मकं समानधर्मकं फलमश्नन्त्येव । शृङ्गग्राहिकान्यायेन प्रवासोपस्थानमेव न स्यादत आह—आगतेति । आगतस्य प्रवासादागतस्य या यजमानस्योपस्थितिरुपस्थानं साऽपि स्त्रीणां सूरयो नेच्छन्ति । न भवतीति भावः ॥ ३१ ॥

यद्याहिताग्निरध्वानं गच्छेत्सहाग्निसत्रयेण पार्श्व-
तोऽग्निहोत्रेणानुव्रजेदाहिताग्निरन्तरं न व्यवेया-
द्यावत्यो ग्राममर्यादा नद्यश्च तावतीरतिक्रामन्त-
मन्वारमेयातां यदि नान्वारमेयातामग्नयो लौ-
किकाः संपद्येरंस्तस्माद्ग्राममर्यादां नातिहरन्ति ॥ ३२ ॥

तस्माच्छ्रुत्यर्थानुवादादित्यर्थः ॥ ३२ ॥

शरीरैरग्नीन्समानीय दहनवदवकाशं जोषयित्वा
प्रेतेऽमात्या इत्येतदादि कर्म प्रतिपद्यते ॥ ३३ ॥

कर्म पैतृमेधिकम् ॥ ३३ ॥

तयोर्यः पूर्वो म्रियेत ( यजमानः पत्नी वा )
तस्याग्निभिस्त्रेतायां पितृमेधः संपद्यते । यः पश्चादौ-
पासनेन ॥ ३४ ॥

अत्रापत्नीकस्याऽऽहिताग्नेर्मरण औपासनेन निर्मन्थ्येन वा दहेदिति सूत्रकारादिभि-रुपदेशात् । वेदसारसूत्रविरुद्धतया सूत्रकारवचनस्यापरिग्राह्यत्वात् । सूत्रे तु पूर्वं मृतस्य यजमानस्य वैतानिकैरौपासनेन च दहनमनुक्रान्तम् । पत्न्याश्च निर्मन्थ्येन दहनमुच्यते निर्मन्थ्येन पत्नीमिति । तत्र कथं पश्चान्मृताया औपासनाद्भवति । तस्मादौपासनवतः (पूर्वं मृतस्यौपासनेन पश्चान्निर्मन्थ्येनेति गम्यते ) । आहिताग्नेर्वैतानिकैरौपासनेन च दहनं भवति । औपासनरहितस्य तु वैतानिकैरेवेति । तस्मान्नित्या आहिताग्नेर्दाह वैतानि-काग्नयः । यस्य त्वौपासनश्चास्ति वैवाहिकः किमिदानीं न वेति । यजमाने ( विद्यमाने) मृतायाः पत्न्या निर्मन्थ्येन दहनमिति ।

पत्नी चेद्विधवा भूत्वा प्रमीयेत कदाचन ।
तदा श्रौताग्निशून्यत्वान्निर्मन्थ्येनैव दह्यते ॥

पत्नीति । प्रमीयेत म्रियेत । श्रौताग्निशून्यत्वादिति । पूर्वमृतस्य पत्युर्दाहे तद्विनियो-गादिति भावः ॥ ३४ ॥

---

१ क. त्रेतया पि° ।

अथ दम्पत्योरेकदा मृतौ व्यवस्थामाह—

सहैव प्रमीते सहैव पितृमेधः ॥ ३५ ॥

दम्पत्योरेकदा मृतौ विशेषमाहाऽऽपस्तम्बः 'तथैव प्रेते सहैव पितृमेधो द्विवचनलिङ्गान्मन्त्रान्संधारयन्ति' इति । पितृमेधो दाहान्तं कर्म । दाहान्तमेकतन्त्रत्वमिति बौधायनोक्तेः । अस्थिसंचयनमप्येवम् । उदकपिण्डदानादि पृथगेव । सहगमनेऽप्येवम् । तदाह भाष्यार्थसंग्रहकारः—

एककालमृतौ भार्या भर्ता च यदि चेद्द्वयोः ।
मन्त्रेण दहनं कुर्यात्पिण्डश्राद्धं पृथक्पृथक् ॥
एककाले मृतौ जायापती यदि तदा विभुः ।
विभज्याग्निं क्रियां कुर्यादिति यत्तदसांप्रतम् ॥
दाहान्तमेकतन्त्रत्वमिति याज्ञिकसंमतम् ।
मृतं पतिमनुव्रज्य या नारी ज्वलनं गता ॥
अस्थिसंचयनान्तोऽस्या भर्तुः संस्कार एव हि ।
कीकसानां तु संस्कारो न्यायसिद्धोऽपि यो मतः ॥
एककाले मृतेऽप्येवं कीकसानां विधिः स्मृतः ।
नवश्राद्धं सपिण्डान्तं भिन्नकालमृतौ यथा ॥

कपर्दिकारिकाऽपि—मृते भर्तारि तद्दाहात्प्रावपत्नी म्रियते यदि ।

पत्न्यां वा प्राक्प्रमीतायां दाहादर्वाक्पतिर्मृतः ॥
तत्र तन्त्रेण दाहः स्यान्मन्त्रेषु द्वित्वमूहनं ।
कीकसाना तु संस्कारः पृथगेव तयोर्भवेत् ॥
एकाहमृत्यौ युगपन्नवश्राद्धादिकं तयोः ।
मृतं पतिमनुव्रज्य पत्नी चेदनलं गता ॥
तत्रापि दाहस्तन्त्रेण पृथगस्थिक्रिया भवेत् ॥ इति ।

अस्थिसंचयनपृथक्त्वे विकल्पः । सहगमने सर्वत्र पाकैक्यमाहात्रिः—

एकचित्यां समारूढौ म्रियेते दम्पती यदि ।
तन्त्रेण श्रपणं कुर्यात्पृथक्पिण्डं समाचरेत् ॥ इति ॥ ३५ ॥

यदि न स्याद्विवाहस्तदा किमित्याह—

१ क. सह प्रमीतयोः सहैक पि° ।

**दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयं कुर्यात् । अग्निहोत्रं दर्शपूर्णमासाग्रयणार्थं च शेषाणि कर्माणि न भवन्ति ॥ ३६ ॥**

अग्न्याधानमात्रं कुर्यान्नेतराणि कर्माणीति भावः । तत्राऽऽह त्रिकाण्डमण्डनः—

एकाकी वाऽऽदधीताग्नीन्विवाहश्चेन्न सिध्यति ।
नित्येष्ट्याग्रयणान्यग्निहोत्रं कर्मास्य नेतरत् ॥ इति ।

चेद्यदि विवाहो न सिध्यति न भवेत्तर्ह्येकाकी वाऽग्नीनादधीत । एतेन कुशपत्न्यादिकल्पनां विनैव विधुराग्निहोत्रं सिद्धम् । तत्र किं किमित्याह—अस्य विधुराग्निहोत्रिणस्तेष्वग्निषु नित्येष्ट्याग्रयणानि । नित्येष्टी दर्शपूर्णमासौ । यद्यप्येतयोर्जीवननिमित्तेन नैमित्तिकत्वं प्रतिभाति तथाऽपि साधितं नित्यत्वं सिद्धान्ते । यद्वा नैमित्तिकमपि नित्यमेव । यतोऽस्याकरणे प्रत्यवायजनकत्वमुत्पत्स्यमानदुरितप्रतिबन्धकत्वं चास्तीति दिक् । इष्टिग्रहणात्पश्वादिकं न भवति । नित्योपादानात्काम्येष्वनधिकारः । आग्रयणमग्रस्यान्नस्यायनं प्राप्तिरिति बहवृचब्राह्मणभाष्यम् । अतस्तदवश्यं कर्तव्यम् । अन्यथा जीवनविरोधात् । स्मर्यन्ते च तद्विनाऽन्नाशने बहवो दोषाः—

आनष्ट्वा तु नवैः सस्यैर्देवानथ हुताशनं ।
प्राणानेवात्तुमिच्छन्ति येऽश्नन्ति काममोहिताः ॥ इति ।

तदत्र सस्यग्रहणात्सर्वेषां यागसाधनार्थत्वप्राप्तौ व्रीहीन्यवान्वा । हवींषि व्रीहिभिर्वा यजेत यवैर्वा यजेतेति सूत्राभ्यामुभयोरेव यागसाधनत्वावगमादुभाभ्यामनुष्ठाने तत्तत्सहभावजनितसस्यानामनुग्रहे ग्रैष्मवार्षिकसस्यानुग्रहार्थं श्यामाकवेणवानामपि संग्रहः । न त्वाग्रयणात्पूर्वं नूतनगुल्मलतादीनां तत्तत्कालीनानामभक्ष्याणामित्यभियुक्ताः । सस्यानामेवेत्यन्ये । व्रीहियवानामित्यपरे । अग्नौ हूयते यत्तदग्निहोत्रं पयः । तद्यत्र साधनत्वेन विद्यते तदग्निहोत्रं कर्मनामधेयम् । तत्संज्ञं कर्म भवतीतीत्तरचातुर्मास्यादिकं न ॥ ३६ ॥

+( अथैकपुनराधाननिमित्तानुगतधर्मचक्रान्तर्भूतपेक्षारूपनिमित्तं वक्तुमारभते—
**यदि पत्नी सीमान्तमादित्योऽस्तमियाद्वा पुनराधेयं तस्य प्रायश्चित्तम् )।**

+ वर्तुलकंसस्थो ग्रन्थः क. पुस्तकस्थः ।

१ ख. ग. 'यादृशं' । २ क. 'साधाग्रयणं च

यद्याहिताग्निः पशुभ्यो म्रियेताऽऽ गावो अग्मन्निति द्वे चतुर्गृहीते जुहुयाद्यद्याहिताग्निरशनिहतो म्रियेत तस्य प्रायश्चित्तं मूर्धानं दिवो अरतिं पृथिव्या इति चतुर्गृहीतं जुहुयाद्यद्याहिताग्निरप्सु म्रियेतेमं मे वरुण तत्त्वायामीति द्वे चतुर्गृहीते जुहुयात् ॥ ३७ ॥

पशुश्चतुष्पाज्जीवराशिवाची गोमाहिषादिः । अशनिर्वज्रः । अशनिपातमृतानां—अग्निर्मूर्धा इति द्वाभ्याम् । मूर्धानं दिव इत्येतया वा ( बौ० पि० २।८।१ ) इति बौधायनः ॥ ३७ ॥

यद्याहिताग्निर्विषदष्टो म्रियेत नमो अस्तु सर्पेभ्य इति तिसृभिश्चतुर्गृहीतैर्जुहुयाद्यद्याहिताग्निर्दंष्ट्रिभ्यो म्रियेत दंष्ट्राभ्यां मलिम्लूनिति द्वे चतुर्गृहीतेन जुहुयाद्यद्याहिताग्निः प्रोषितः प्रमीतो न प्रज्ञायेत यां दिशमभि प्रस्थितः स्यात्तामस्याग्निभिः कक्षं दहेयुः ॥ ३८ ॥

नम इति तिसृणामन्तः । सर्पदष्टमृतानामिति बौधायनः । दंष्ट्रिभ्यो वराहादिभ्यः । यदि प्रोषितो मृत इति न तावज्ज्ञायेत तत्त्वं मृत इति तदा गमनकाले यां दिशं प्रति प्रस्थितः स्यात्तस्यां दिशि तदानीं यः कक्षस्तमस्याग्निभिस्तूष्णीं दहेयुः । यद्वा पुरस्ता दाहवनीयेत्यादिविधिना तूष्णीं दहेयुरित्यर्थः ॥ ३८ ॥

अपि वा त्रीणि षष्टि[शतानि] पलाशवृन्तानां तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तामस्याग्निभिर्दहेयुरिति विज्ञायते । पलाशवल्कैः कुशैर्वा संधिषु संप्रवेष्ट्य चत्वारिंशता शिरः प्रकल्पयते । दशभिर्ग्रीवां विंशत्योरस्त्रिंशतोदरं पञ्चाशता पञ्चाशतैकैकं बाहुं ताभ्यामेव पञ्चभिः पञ्चभिरङ्गुलीरुपकल्पयते सप्तत्या सप्तत्यैकैकं पादं ताभ्यामेव पञ्चभिः पञ्चभिरङ्गुलीरुपकल्पयते । अष्टाभिः शिश्नं द्वादशभिर्वृषणम् । ( तैः कृष्णाजिने पुरुषा·

कृतिं कृत्वा) स्नापयित्वाऽलंकृत्यान्तर्वेदि कृष्णा-
जिनं दक्षिणाग्रीवमधरलोमाऽऽस्तीर्य तस्मिन्नेन-
मुत्तानं निपात्य पत्तोदशेनाहतेन वाससा प्रच्छा-
द्य बान्धवाः पर्युपविशन्ति (अभिमृशन्ति) अय-
मस्यासौ यस्य त इमे अग्नय इति प्रेतेऽमात्या
इत्येतदादि कर्म प्रतिपद्यते ॥ ३९ ॥

पलाशस्य वृन्तानि पलाशवृन्तानि । त्रीणि त्रीणि पलाशानि येषु काण्डेषु तिष्ठन्ति तानि वृन्तानीत्याचक्षते । तेषां षष्ट्यधिकानि त्रीणि शतान्युपक्लृप्तानि भवन्ति । तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तां वा दहेयुः । तस्या रचनाप्रकारः पितृमेधेन दाहश्च बाह्वृच्ये पितृमेधकल्पेषु च पृथक्पृथगुक्तस्तत्र तत्रैव द्रष्टव्यः ॥ ३९ ॥

यदि तानि न विन्देरन्नवानां दर्भाणां याज्ञिकानां
वा वृक्षाणां तैः कृष्णाजिने पुरुषाकृतिं कृत्वा
*( तामस्याग्निभिर्दहेयुरिति विज्ञायते । यदि
तानि न विन्देरन्भूम्याः पांसूनुद्धृत्य) मधुना
सर्पिषा संसृज्य *(तैः कृष्णाजिने पुरुषाकृतिं
कृत्वा तामस्याग्निभिर्दहेयुरिति विज्ञायते) विधिना
दाहयेत् ॥ ४० ॥

अत्राप्युपाधिकृतिं पूर्ववत् । ततो ग्र(गृ)हे प्रमीतस्यैव पैतृमेधिकं दहनं पात्रचयन-संयुक्तमेव क्रियते । तथाऽऽपस्तम्बीयाऽनुमतिरेव । अतो नात्र ब्राह्मणेभ्यो यज्ञायुधानीति विधिरिति ॥ ४० ॥

यद्येवं कृते यजमानः पुनरागच्छेत्तत्रापि विधिमाह—

यद्येतस्मिन्कृतेऽग्निभिः पुनरागच्छेद्घृतकुम्भादु-
न्मग्नस्य जातकर्मप्रभृति द्वादशरात्रं व्रतं चरित्वा
तयैव जाययाऽग्नीनोधाय प्राजापत्येन पशुना वा
यजेत ॥ ४१ ॥

* वर्तुलकंसस्थो ग्रन्थो ख. ग. पुस्तकयोरधिक इति भाति ।

१ ख. ग. 'नादधीत भार्ये' ।

यद्येवं कृतेऽग्निभिर्यजमानः पुनरागच्छेत्कथं तत्र कुर्यादिति । यज्ञियात्काष्ठादग्निं मथित्वाऽग्निमुपसमाधाय संपरिस्तीर्याऽऽग्निमुखात्कृत्वा पक्वाज्जुहोति—हिरण्यगर्भः समवर्तताग्र इति द्वाभ्याम् । अथाऽऽज्याहुतीरुपजुहोति—सहस्रशीर्षा इत्येतेनानुवाकेन प्रत्यृचम् । स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् । अपरेणाग्निं सौवर्णेन पात्रेण घटेन वा मृन्मयेन कृष्णाजिनेन वा द्रवीभूतेन घृतेनाद्भिः पूरयित्वा जीवत्पितुश्चेत्पिताऽभिमन्त्रयते—विष्णुर्योनिं कल्पयत्विति । अथैनं प्रवेशयति– त्वां पूषञ्छिवतमामेरयस्वेति । स गर्भो भूत्वा कृष्णाजिनादतावेतां रात्रिं वसति । व्युष्टायां पुंसवनप्रभृत्या जातकर्मणः कारयित्वा जघनार्धादात्मानमपकृष्य जायेत । जातस्य जातकर्मप्रभृतिसंस्कारान्कारयित्वा द्वादशरात्रमेतद्व्रतं चरेत् । तथैव भार्ययाऽग्नीनाधाय आत्येनेन्द्राग्नेन पशुना यजेत ( बौ० २–७–१ । १० ) इति बौधायनीये विशेषः । द्वयोः पुण्याहयोः पूर्वदिनरात्रौ तत्पिता तत्तुल्यो वा प्रवेशहोमादि सर्पिषा पूरिते घटे यजमानं प्रवेश्यैनं तां रात्रिं तत्र वासयेत् । प्रातस्तु जातकर्मादिविवाहान्तः स्वभार्यया कार्यः । ततो द्वादशाहं ब्रह्मचर्यव्रतं चरेत् । अत्र मण्डनकारस्तु क्रियालोपस्यैव स्वरूपान्तरमाह—

अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदेहिकम् ।
प्रायश्चित्तमसौ स्मार्तं कृत्वाऽग्नीनादधीत च ।

यष्टारं प्रवासितर्यमृतं यष्टारं मृतमाकर्ण्य पुत्रादिना यस्य यष्टुरौर्ध्वदेहिकं पर्णशरविधिना कृतम् । पश्चात्कियता कालेनाऽऽगतेन यष्ट्रा किं कार्यमत आह— प्रायश्चित्तमिति । असौ स्मार्तं प्रायश्चित्तं कृत्वाऽग्नीन्पुनरादधीत च ॥ ४१ ॥

**गिरिं गत्वाऽग्नये कामायेष्टिं निर्वपेदायुष्मतीं शतकृष्णलाम् । दिशामवेष्ट्या वा यजेत ॥ ४२ ॥**

काम्येष्टिप्रश्ने व्याख्याता ॥ ४२ ॥

**अत ऊर्ध्वमीप्सितैर्यज्ञक्रतुभिर्यजेतेति विज्ञायत इति विज्ञायते ॥ ४३ ॥ ( ख० ४ ) ॥**

**इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (पितृमेधापरपर्याये) एकोनत्रिंशप्रश्ने चतुर्थः पटलः ॥ ४ ॥**

**एकोनत्रिंशप्रश्नश्च समाप्तः ॥**

१ ख. ग. 'वेदीप्सि' । २ ख. ग. तैः क्र' ।

अत ऊर्ध्वमिति वचनं दिशामवेष्ट्या वा यजेत ( भ० पि० २-४-२४ ) इति। यागादत अनन्तरमित्यर्थः । ईप्सितैर्यज्ञक्रतुभिरिति नित्यनैमित्तिककाम्यैरिष्टिपशुसोमैर्वा यजेत । विज्ञायत इत्यभ्यासः प्रश्नसमाप्त्यर्थः ॥ ४१ ॥ ( ख० ४ ) ॥

इति सत्याषाढहिरण्यकेशिपितृमेधव्याख्यायां महादेवशास्त्रिकृतायां प्रयोगवैजयन्त्यामेकोनत्रिंशप्रश्ने चतुर्थः पटलः ॥ ४ ॥

प्रयोगवैजयन्त्यास्तु मालायाः सूत्रसंस्थितेः ।
पितृमेधस्येह कृतो निर्णयः कौस्तुभो मणिः ॥
मध्यगो यज्ञवपुषस्तुष्टयेऽस्तु मयाऽर्पितः ।
गृह्णाति हि किमप्येष भक्तैर्यद्यत्ततः कृतम् ॥

इति सत्याषाढहिरण्यकेशिपितृमेधीयमहादेवकृतवैजयन्तीव्याख्या समाप्ता ॥

# अथ परिशिष्टम् ।

अथ गर्भिण्यास्तिष्यक्रिया[या] ऊर्ध्वं मृतौ तां श्मशानं नीत्वा दहनवदवकाशं जोषयेत् ॥ १ ॥

तिष्यक्रिया सीमन्तः । गर्भिण्यामन्तर्वत्न्यां म्रियेतेति बौधायनः ॥ १ ॥

चितां कल्पयित्वा तस्याश्चिताया अपरेण परिश्रिते करोति ॥ २ ॥

कटादिभिरित्यर्थः ॥ २ ॥

तामुत्तानां कृत्वा तस्या वामोदरमालिख्य हिरण्यगर्भः समवर्तताग्र इत्यालोकनं च कृत्वा कुमारं दृष्ट्वा तमभिमन्त्रयते—जीवतु मम पुत्रो दीर्घायुत्वाय वर्चस इति ॥ ३ ॥

चितामपरेण सव्येन वा प्रेतस्योदरं लिखेत् । हिरण्यगर्भ इत्यनुल्लेखनम् । कुमारं दृष्टमनुमन्त्रयते—जीवतु मम पुत्रः० वर्चस इति मन्त्रान्तः ॥ १ ॥

अथ बालं स्नापयेद्धिरण्यमन्तर्धाय जीवतो ग्राममायाति ॥ ४ ॥ यस्ते स्तनः शशय इति स्तनं प्रदाय तस्मिन्नुदर आज्याहुतीर्जुहोति—शतायुधाय शतवीर्यायेति पञ्च प्राणाय स्वाहा व्यानाय स्वाहेत्येताभ्यामनुवाकाभ्यां जुहोति ॥ ५ ॥ अव्रणं च कुर्यात्मेनं चितामारोप्य विधिना दहेत् ॥ ६ ॥

गर्भश्चेदप्राणस्तं प्रक्षाल्य निखनेत्स यदि जीवञ्जीव त्वं मम पुत्रक इत्युक्त्वा क्षेत्रिये त्वेति पञ्चभिः स्नापयित्वा हिरण्यमन्तर्धाय भूमौ निधाय व्याहृतिभिरभिमन्त्र्य यस्ते स्तनः शशय इति स्तनं पाययित्वा शिशुं ग्रामं प्रापयेत् । गर्भच्छेदस्यान्ते शतायुधायेति पञ्चाऽऽहुतीर्हुत्वा प्राणाय स्वाहा पूष्णे स्वाहेत्यनुवाकाभ्यां व्याहृत्या वाऽऽज्यं हुत्वा भिन्नमुदरं सूत्रेण संग्रथ्य घृतेनानुलिप्य ब्राह्मणाय तिलान् गां भूमिं सुवर्णं दद्यात् । अथ यथोक्तेन कल्पेन दहेदिति वैखानसः । बौधायनेन तु शतायुधायेति पञ्चहोमानन्तरं प्रयासायाऽऽयासाय वियासाय संयासायोद्यासाय शुचे शोकाय तप्यते

तपस्ये ब्रह्महत्ये सर्वस्मै, इति स्वाहान्तैराहुतयोऽप्यधिका उक्ताः । कपर्दिकारिकायाम्—

यदा गर्भवती नारी सशल्या संस्थिता भवेत् ।
कुक्षिं भित्त्वा ततः शल्यं निर्हरेद्यदि जीवति ॥
प्रमीतं निखनेत्तं तु प्रायश्चित्तमतः परम् ।
सा त्रयस्त्रिंशता कृच्छ्रैः शुध्यते शल्यदोषतः ॥
सगर्भदहने तस्या वर्णजं वधपातकम् ।
प्रायश्चित्तं चरित्वा तु शुध्यन्ति पापकारिणः ॥
दग्ध्वा तु गर्भसंयुक्तां त्रिरब्दं कृच्छ्रमाचरेत् ॥ इति १ ॥

समाप्तं परिशिष्टम् ॥

# अथ सत्याषाढहिरण्यकेशिसूत्रीयं शोधनपत्रम् ।

पञ्चमभागस्थं

( एकादशप्रश्नमारभ्य चतुर्दशप्रश्नपर्यन्तम् ) ।

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| क्ष्णू | क्ष्णु | ७ | २१ |
| वपामुपं | वपामुद्धृत्योपति | ९ | ११ |
| प्रक्रामति | प्रक्रामन्ति | ९ | १९ |
| कृष्णाजिनस्यान्ता | कृष्णाजिनान्ता | १२ | १ |
| र्थमुपार्थे | र्थ उपार्थे | १३ | १८ |
| ' तस्या एव ' ( इत्यस्य पूर्वम् ) | यस्या उत्तमां करोति | १५ | २१ |
| शकृत्यु | शकृन्त्यु | १५ | २१ |
| देवीरित्यग्रेण | देवीत्यग्रेण | १६ | ५ |
| लोहितपचनैः | लोहितपचनीयैः | १६ | ६ |
| शिर इति पुरुषाशिरः प्राच्छियैतेन स्वमत्र | शिर एतेन स्वममुष्मिँल्लोके | १७ | १५ |
| स्येके | स्येकेषाम् | १८ | १ |
| इत्याहरति | इति हरति | १८ | ९ |
| पतिः कविरित्येषा | पतिरित्येषा | १८ | १२ |
| वृध्णि | वृष्णि | १८ | २१ |
| अपानपाद्राद्यस्थादुपस्थं जिह्मानामूर्ध्वः स्वयशा उपस्थे । उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन्निति | अपानपात्समन्या यन्तीति | १९ | २७ |
| धाता होत्राय | धाता ऽ होत्राय | २० | ३ |
| प्रयाजानामाप्रियो | प्रयाजानामाज्या | २० | १८ |
| पर्यग्निकृतानु | पर्यग्निकृत्य तानु | २१ | ९ |
| कपालः पुरोडाशो | कपालः पशोः पुरोडाशो | २२ | ६ |
| क्रमुक | क्रुमुक | २५ | १२ |
| दशकामस्य | दशायकामस्य | २६ | १५ |
| सयुजा न | संयुजा न | २७ | २३ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| मरष्यत्युत्वा | मरिष्यन्तुत्वा | २७ | २८ |
| शिक्ये षड्गुधामे | शिक्ये त्रिवृति षड्गुधामे | २८ | १ |
| बाध५ साद | बाध५ सस्साद | २८ | ८ |
| गरुत्मानित्युरुय | गुरुत्मान्त्रिवृते शिर इत्युरुय | २८ | २० |
| मित्याहुत्योप | मित्यावृत्योप | २९ | ८ |
| उदुत्तमामिति शिक्य | उदुत्तमं वरुणपाश- मस्मदिति शिक्य | २९ | २१ |
| मत्रशीर्ष | मात्रशीर्ष | ३० | १ |
| प्रादेशमात्रपादा मौञ्जविवाना फल | प्रादेशमात्रा फल | ३० | २ |
| हस्तवत्योपतिष्ठन इत्येके समामनन्ति | त्रिशस्त्वा सर्वा वाञ्छ- न्तिवस्यत्रेवेके समामनन्ति मुपदध इति साय | ३० | १४ |
| मुपदधे तया देवतयाऽङ्गि- रस्वद्ध्रुवा सीदेति साय | | ३१ | १० |
| हस्ताभ्यां गायत्रेण च्छन्दसा | हस्ताभ्यां त्रैष्टुभेन छन्दसा | ३१ | १३ |
| मुपदधे तया देवतयाऽङ्गि- रस्वद्ध्रुवा सीदेति प्रातः | मुपदध इति प्रातः | ३१ | १४ |
| मति । उत्तरेद्युरुपतिष्ठने वात्सप्रेणेति | मत्युत्तरेद्युर्वात्सप्रेणो- पतिष्ठने | ३१ | २२ |
| भ्रियमाणे | ह्रियमाणे | ३२ | ४ |
| कृष्णवर्त्मनो अमि | कृष्णवर्त्मने । अमि | ३२ | ९ |
| भ्रियमाणे | ह्रियमाणे | ३२ | १४ |
| आपप्र | आपप्रु | ३२ | १८ |
| वहिष्ठे | वहिष्ठे | ३२ | १७ |
| भ्रियमाणे | ह्रियमाणे | ३२ | २९ |
| मिस्तिस्त्रः समिध | मिस्तिसृभिस्तिस्त्रः समिध | ३२ | ३० |
| भ्रियमाणे | ह्रियमाणे | ३३ | ६ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| ज्योतिष्मानिति | ज्योतिष्मान्याहीति | १३ | २९ |
| संनिपातितासु | संनिपतितासु | १४ | १७ |
| सुमतꣳ | सुकृतꣳ | १४ | १४ |
| हिरण्मयꣳ | हिरण्ययꣳ | १४ | २४ |
| स्तनं मधुमन्तं धयापां ( प्रप्यातमग्ने सरिरस्य मध्ये । उत्सं जुषस्व मधुमन्तमूर्व समुद्रियꣳ सदनमाविशस्व ) इति द्वाभ्यामुरुप | स्तनमूर्जस्वन्तं धयापामिति द्वाभ्यामुरुप | १४ | २१ |
| गृभ्णीत | गृह्णीत | ३१ | ४ |
| बोधवती | बोधद्वती | ३१ | ११ |
| भस्मप्रवेशनं कृत्वा दीक्षितस्य कृतास्विष्टकासु भक्त्वा | भस्मप्रवेशनं कृतास्विष्टकासु दीक्षमाणस्याकृता | ३१ | २० |
| मासप्रभृतिषु दीक्षाकल्पेषु पुरस्तादद्दीक्षितस्येतरेषुपरिष्टात्प्राजापत्यात्पशोः, मृन्मयी | मासप्रभृतिषु कल्पेष्वदीक्षितस्य पूर्वेषुपरिष्टात्प्राजापत्या मृन्मयी | ३१ | २२ |
| भिन्नां चोपदधाति | भिन्नामुपदधाति | ३७ | ११ |
| मातृण्याः शर्करा हिरण्येष्टकाः | मातृण्यास्त्रयोदश हिरण्येष्टकाः | ३७ | २२ |
| मुसलं शूर्पमश्मानः पशु | मुसलं पशु | ३७ | २३ |
| तृतीयम् । उत्तरमुत्तरं ज्यायाꣳसम् । महान्तं बृहन्तमपारिमितं स्वर्गकामश्चिन्वीतेति वाजसनेयकम् । अप | तृतीयं महान्तं बृहन्तमपारिमितꣳ स्वर्गकामश्चिन्वीतेति नित्येकामश्चतुर्थप्रभृतिष्वाहारेषु नित्यमिष्टकापरिमाणमुत्तरमुत्तरं ज्यायाꣳसं चिन्वीताप | ३८ | २८ |
| सꣳसृजाद्भि | संमृज्याद्भि | ३८ | २९ |
| ते योनिर्ऋत्विय इति | ते योनिरिति | ३९ | २७ |
| पक्काः शिक्यं | पक्कास्ताः शिक्यं | ४२ | १ |
| ( तस्येष्टकाभिरित्यारभ्यदक्षिणापवर्गमित्यन्तं सूत्रं नास्त्येव ) | | ४२ | १३ |
| प्रदक्षिणमावर्तते | प्रदक्षिणमावर्तन्ते | ४३ | ७ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| वसुमनाः सुमेधा | वसुवनिः सुमेधा | ४३ | ११ |
| मोदमानः सुवर्णाः । अ | मोदमानः । अ | ४३ | १२ |
| उत्तिराणीस्यप्र | उत्किरामीस्यप्र | ४३ | १३ |
| प्रतीनाहमुमे | प्रतीनाहावुमे | ४५ | ११ |
| प्रसारयति | प्रसारयन्ति | ४५ | १७ |
| अनाप्ता यां वः प्र | अनाप्ता यापः प्र | ४६ | ११ |
| द्विषस्तरध्ये | द्विषस्त ऋध्या | ४६ | १४ |
| नोर्जे भागं | नोर्जो भागं | ४६ | २३ |
| भव । गायत्री | भवगायत्री | ४६ | २८ |
| तन्नो विश्वतो मह | तन्नो मह | ४७ | ३ |
| कृषति | कृषन्ति | ४७ | ९ |
| पुच्छशिरोऽधि | पुच्छाच्छिरोऽधि | ४७ | १३ |
| प्रदक्षिणमावर्त | प्रदक्षिणमभ्यावर्त | ४७ | १५ |
| 'भुङ्क्ष्वेति' | ( इत्यत्र खण्डसमाप्तिः ) | ४७ | १६ |
| सीतान्तराछान्सं | सीतासमरान्सं | ४७ | १९ |
| भवति | भवन्ति | ४८ | ५ |
| चतुर्दशाभिरोषधीर्वपति | चतुर्दशाभिर्ऋग्भिरोषधी निर्वपति | ४८ | २१ |
| या ओषधीनां | यामोषधीनां | ४९ | १ |
| मनसा ध्यायेदुप्ता मेऽसीति वा अधि | मनसा वा ध्यायेदुप्ता मेऽसीत्यधि | ४९ | ५ |
| 'ये वनस्पतीनां' | ( इति संपूर्णं सूत्रं नास्ति ) | ४९ | ११ |
| पशुकामस्य त्रिणवा | पशुकामस्य परिमितुया-त्रिणवा | ५० | १६ |
| दर्भाग्रमुष्टिनाऽऽज्येनावो | दर्भाग्रमुष्टिनाऽऽज्येनावो | ५२ | १२ |
| ध्यालिखिता मध्ये | ध्यालिखितां मध्ये | ५३ | १७ |
| प्राचीरपवर्गवादा वचना | प्राचीरपवर्गवादो वचना | ५३ | २१ |
| अन्तरिक्षं द्यौर्योनि | अन्तरिक्षं योनिर्द्यौ | ५५ | २० |
| तिसृभिः सर्प | त्रिभिः सर्प | ५६ | ९ |
| कृणुष्व पाज इति | कृणुष्व पाजः प्रसितिमिति | ५६ | १२ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| देवानामग्नेर्यान्य | देवानामग्नेयान्य | १९ | १२ |
| अपां गम्भोरं | अपां गभीरं | १० | ७ |
| अघोरः प्रजा अभि वि | अच्छिद्रः प्रजा अभि वि | १० | ८ |
| समुद्रान् त्स्वस्सलिलाग्र्या-लोकानपांपति | समुद्रान् सलिलान्स्वर्ग्या-नपांपति | १० | |
| वसानः स्वां योनिं यथा-यथमित्यभि | वसानः सुकृतस्य लोक इत्यभि | १० | ११ |
| परिश्रुत्य(रितस्य) | परितस्य | १० | १४ |
| द्युमत्तम वद | द्युमत्तमं वद | १० | १७ |
| वा मुसलम् । दिवो वा विष्णाविति शूर्पम् । सिक-ताभिस्त्वां पूरयति द | वा सिकताभिस्त्वां पूरयति द | ११ | ११ |
| वेदिमस्थात् | वेदिमध्यस्थात् | १२ | ४ |
| तत्करोत्वित्युक्ता | तत्कृणोत्वित्युक्ता | १२ | १ |
| सुकृतुः | सुकृतुं | १२ | ९ |
| भासेति | भासेत्वेति | १२ | २१ |
| अग्निज्योतिषा | अग्निर्ज्योतिषा | १२ | २९ |
| दक्षिणं यो | दक्षिणा यो | १४ | ९ |
| दक्षिणं वस्त | दक्षिणा वस्त | १४ | ९ |
| व्यवायन् | व्यवयन् | १४ | १० |
| वातो देवता | वायुर्देवता | १५ | १७ |
| दुहाना | दुहानाः | ११ | २४ |
| संदधाति | संदधते | ११ | २५ |
| अमृतस्य लोकम् | अमृतस्य गोपाः | ११ | २५ |
| गृहीतं एति | गृहीत एति | १७ | १ |
| तेनातिष्ठाद्दिव | तेनातिष्ठन्दिव | १७ | १ |
| पक्षात्पुच्छेषु | पक्षास्मपुच्छेषु | १७ | १५ |
| रश्मयोरुपद | रश्मयोरित्युपद | १७ | १५ |
| धाम्ये त्वा | धाम्ने त्वा | १७ | २९ |
| वित्तिरसि | आक्तिरसि | १८ | १ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| शक्तिरसि | वित्तिरसि | ६८ | १ |
| क्षत्रं दृश्ह | क्षत्रं दुह | ६८ | ५ |
| 'विश्वेषु त्वा देवेषु सादयामि' | (एतद्वाक्यं नास्ति) | ६८ | ८ |
| भूरिजिद | अभिजिद | ६८ | ११ |
| अभिजिद | भूरिजिद | ६८ | १२ |
| भ्राडसि विभ्राडसि प्रभ्राडसि | राडसि विराडसि सम्राडसि | ६८ | १३ |
| सादयामि । आभिमाति | सादयाम्यभिमाति | ६८ | १४ |
| 'यातुहनं त्वा वज्रं सादयामि' | (एतन्नास्ति) | ६८ | १५ |
| पिशाचहनं त्वा वज्रं | रक्षोहणं त्वा वज्रं | ६८ | १६ |
| रक्षोहणं त्वा वज्रं | पिशाचहनं त्वा वज्रं | ६८ | १७ |
| शत्रुहणममित्रहणं | यातुहणमसुरहणं | ६८ | १७ |
| 'असुरहणं' | (एतन्नास्ति) | ६८ | १८ |
| त्वेन्द्रं | त्वेन्द्रं | ६८ | १८ |
| सीदोर्जिसीद | सीदोर्जिषीद | ६८ | २१ |
| 'सुभूते सीद' | (एतन्नास्ति) | ६८ | २२ |
| 'वत्सरे सीद' | (न वर्तेत एतत्) | ६८ | २५ |
| वरुणं गर्भ | वरुणराजानं गर्भ | ७० | २९ |
| संभव । औषधोऽसि | संभवौषधयोऽसि | ७० | २९ |
| 'साजरां' | (एतन्नास्ति) | ७१ | २ |
| मद्यं | मनुष्यं | ७१ | २ |
| विराडसि | विडसि | ७१ | ३ |
| यदूनं | यत्त ऊनं | ७३ | ३ |
| यद्वाऽत्राति | यदुतेति | ७३ | ३ |
| विश्वेदेवा अङ्गिरस | आदित्यास्तदङ्गिरस | ७३ | ४ |
| अग्ने समिधः । चित्ति | अग्ने समिध इत्येषा चित्ति | ७३ | ६ |
| जातवेद ऊर्जो | जातवेदस ऊर्जो | ७३ | ८ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| दधाम यज्ञं सु | दुहाम यज्ञꣳ सु | ७१ | ९ |
| नमध्येहि | नवद्धेहि | ७१ | १२ |
| विसर्पतु | ऽवसर्पतु | ७३ | १३ |
| प्रजापतिनात्मान | प्रजापतिमात्मान | ७३ | १४ |
| माप्रीणे रिक्तो | माप्रीणरिक्तो | ७३ | १४ |
| भूरिदाभ्यः | भूरदाभ्यः | ७४ | १२ |
| षड्भिश्चितिं चितिमुपधायामि जुहोति | षड्भिश्चितां चितामभि-जुहोमि | ७४ | १४ |
| चित्यन्ते समानानि | चित्यन्तेषु समानानि | ७४ | १७ |
| विद्धस्य | विद्थस्य | ७४ | २८ |
| मुत्तमा चितिः । श्रीणि | मुत्तमा श्रीणि | ७५ | ११ |
| ग्योपसच्चिति | उपसदश्चिति | ७६ | १३ |
| संयान्ये | संयान्यौ | ७७ | १० |
| अपस्पिन्वेति पञ्च | अपस्पिन्वौषधीर्जिन्वेति पञ्च | ७७ | १६ |
| अव्यथमाना इति | अव्यथमानामिति | ७८ | ७ |
| अन्तरिक्षमन्तरिक्षाय | अन्तरिक्षमस्यन्तरिक्षाय | ८० | २१ |
| समानं तथा | समानतया | ८० | २५ |
| एकयाऽस्तुवतेति सप्तदश | एकयाऽस्तुवत प्रजा अधीय-न्तेति सप्तदश | ८० | २८ |
| ' पौर्वाह्णिकाभ्यां प्रचर्य ' | ( नास्ति ) | | |
| दिशमेकां ( मध्ये ) पञ्च | दिशं पञ्च | ८२ | २७ |
| चोडा उपदधाति | चोडा अभ्युपदधाति | ८२ | २९ |
| उपधाय वृतां | उपधायाऽऽवृतां | ८२ | २९ |
| सुवरित्येतया | सुवरिति चैतया | ८५ | ९ |
| चित्यां चित्यां पशुकाम | चित्यां पशुकाम | ८५ | २२ |
| अम्बा नामासीति सप्त | अम्बा नामासि दुला नामासी-ति सप्त | ८६ | ११ |
| पुरो वातमनिरसीति पञ्च | पुरो वातसनिरस्यभ्रजनिरसीति पञ्च | ८६ | १३ |
| त्वेत्यष्टावादित्येष्टकाः | त्वेति नवाऽऽदित्येष्टकाः | ८६ | १९ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| अमीषावामिषवी | अमिषावामिषवी | ८७ | ११ |
| श्रोर्ध्वयवाश्च | श्रोद्वयाश्च | ८७ | ११ |
| सवयाश्च सह्रा९श्च | सहवयाश्च सहसह्रा९श्च | ८७ | १७ |
| सहस्रा९श्च | सहस्रा९श्च | ८७ | १७ |
| ज्योतिष्मतीः । रोहितेषु वा | ज्योतिष्मतीः ॥ ९ ॥ रो-<br>हितेषु वा | ८७ | २२ |
| सर्वास्तनु | सर्वास्वनु | ८८ | २ |
| म्योऽन्ततः ॥ २० ॥ हिरण्य | म्योऽन्ततः पौर्णमासीमुपधाय<br>हिरण्य | ८८ | १० |
| ‘ अथ घृतमुपदधाति ’ | ( नास्ति ) | ८९ | १९ |
| ‘ अश्मन इषुहस्त उपदधाति ’ | ( नास्ति ) | ८९ | २० |
| उपदधाति । एव | उपदधातीत्येव | ९० | १ |
| जर्तिलयवाग्वा वा गवी-<br>धुकयवाग्वा च ग | जर्तिलयवाग्वा गवी-<br>धुकयवाग्वा ग | ९१ | ३ |
| मुदस्याति | मुदस्याति | ९१ | ११ |
| आर्तिमार्छेति ॥ ( ख० ७ ) ॥ | आर्तिमार्छतीति ॥ ७ ॥ | ९२ | १८ |
| पिता मातरिश्वेति संचितो | पिता मातरिश्वाच्छिद्रापदाधा<br>इति संचितो | ९४ | ७ |
| पश्यमाना आ तन्तु | पश्यमान आ तन्तु | ९५ | १७ |
| संविशाविन्त्विति पश्चा | संविशान्त्विति पश्चा | ९५ | २८ |
| सर्वाभिर्वा ॥ ११ ॥ यं | सर्वाभिर्वैकं यं | ९६ | २७ |
| वैकङ्कतो९ सवितु | वैकङ्क... त९ सवितु | ९९ | ११ |
| तद्वचल्यास्यामः । वेदं कृत्वा | तद्वचारुयामोऽग्नीनन्वाधाय<br>वेदं कृत्वा | १०० | १० |
| स्वतवा९श्चप्रघा....च | स्वतवा९श्च प्रघासी च | १०२ | ३ |
| ‘ ( पाद...नू ) | ( नास्ति ) | १०२ | २९ |
| प्र...षु वाक्यं | प्र मेऽनुवाक्यं | १०२ | ३० |
| र...न वाक्य | रण्येऽनुवाक्यस्य | १०२ | ३० |
| शेषं जुहोति | शेषेण जुहोति | १०३ | |
| रथवाहनं वा व्यक्तयोदि स्ययज्ञसं-<br>... ... | रथं वाहनं वैध्रं गमये-<br>दयज्ञसंयुक्तः कल्पः | १०३ | |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| द्रवीकृत्य | द्रवाणि कृत्वा | १०९ | १६ |
| जुहोति पितुं | जुहोति ग्राम्या हुत्वाऽऽर-ण्या जुहोति पितुं | १०९ | १८ |
| दक्षिणे वा पक्षावस्मिन्कृष्णा। | दक्षिणे वा पक्षाऽस्ययं कृष्णा। | १०६ | २६ |
| नित्यवदेके समामनन्ति देवस्य | नित्यो कामो देवस्य | १०६ | २८ |
| दश वा पर्याये | पञ्चभिर्वा पर्याये | १०८ | १ |
| त्रीन्वातनामानि जुहोति | त्रीन्वातहोमाञ्जुहोति | १०८ | २४ |
| प्राची दिगिति षड्भिः पर्यायैर्दध्ना मधु | प्राची दिगिति षड्भिः प-र्यायैः राज्येन दधिमिश्रेण षट् सर्पाहुतीर्जुहोति यथाऽऽज्याहु-तीर्मध्य उत्तमाभ्यां प्रत्यङ्मुखो हेतयो नाम स्थेति षड्भिः पर्यायैर्दध्ना मधु | १०९ | ४ |
| सुवर्णघर्म | सुवर्न घर्म | १०९ | १३ |
| ममाग्न इत्येतेन | ममाग्ने वर्च इत्येतेन | १०९ | १९ |
| मार्जालीयेऽष्टावितरेषु | मार्जालीयेऽष्टावष्टावितरेषु | १०९ | २४ |
| मितस्थे | मित्रस्थे | ११० | १ |
| कुक्षाविमवसे | कुक्षुविमवसे | ११० | ६ |
| इतराभ्यो वा | इतराभ्यो वा | १११ | २८ |
| यदस्यान्याश्वि | यदस्यान्यश्वि | ११४ | ९ |
| अन्येषामग्नीन्दृष्ट्वा | अन्येषामग्निं चित्वा | ११६ | २० |
| भार्यां रोपेयात् | भार्यां वोपेयात् ॥ १८ ॥ | ११७ | ३ |
| सर्णीकाय त्वेत्यष्टौ नाना | सर्णीकाय त्वेति नव नाना | ११७ | २० |
| प्रतिष्ठेत्स | प्रतितिष्ठेत्स | ११८ | ९ |
| ‘ ( तेऽस्त्र ) ’ | ( नास्ति ) | ११८ | २० |
| यें वा समृध्यर्थे वा संता | यें समध्यर्थे संता | ११८ | २० |
| ‘ ( अस्त्र ) ’ | ( नास्ति ) | ११८ | २१ |
| श्वोभूतेऽष्टौ नाना | श्वोभूते नव नाना | १२० | ११ |
| श्वोभूते एता नाना | श्वोभूत एताश्च नाना | १२० | १७ |
| सर्णीकाय त्वेत्यष्टौ नाना | सर्णीकाय त्वेति नव नाना | १२० | २१ |

३

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| नियमश्च तत्प्रयोगे | नियमश्च योगे | १२२ | १ |
| निरायतग्रीवः | निर्ण्यतग्रीवः | १२२ | २१ |
| द्वयानि तु खलु | द्वयानि खलु | १२१ | १७ |
| पैतृकी वेदि | पैतृयज्ञिकी वेदि | १२४ | ९ |
| तापश्चितं व्याख्या | तापश्चितिं व्याख्या | १२४ | १४ |
| पात्रस्य स्थाने | पात्रस्थाने | १३० | ४ |
| '( तेषां पूर्वेण )' | ( नास्ति ) | १३० | ५ |
| गृह्णीयात् | गृह्णाति | १३० | ११ |
| सारस्वतीं च मेषं सप्त | सारस्वतमुपाकृत्य सप्त | १३१ | १४ |
| एकरूपा इव भवन्ति | एकरूपा भवन्ति | १३३ | २ |
| प्योऽतन्तः | प्योऽन्ततः | १३३ | १२ |
| रशनामुदसन | रशनानामुदसन | १३३ | १३ |
| गोयुक्तानि सप्तदश यानानि सप्तदश शयनानि | गोयुक्तानि सप्तदश यवाचितानि सप्तदश शयनानि सप्तदश यानानि | १३९ | १ |
| सप्तदश९ सप्तदशानि | सप्तदश९ साप्तदशानि | १३९ | ६ |
| शेषः साधारणः । अग्रेण | शेषः साधारणोऽग्रेण | १३९ | ८ |
| प्राञ्चो रथा | प्राचो रथा | १४० | ५ |
| चतुर्धा विभज्य | चतुर्धा विरुज्य | १४० | १४ |
| नैवारमश्वयुग्या | नैवारमश्वो युग्या | १४१ | ११ |
| सीति तार्ष्ये यजमानः | सीति तृणानां वृक्षाणां वासो यजमानः | १४४ | २ |
| वैश्यमन्नाय | वैश्यमन्नाय | १४५ | १२ |
| ' ह्राता ' | ( नास्ति ) | १४५ | २३ |
| दिवं प्रोष्ठती( ष्ठिनी )मा | दिवं प्रोष्ठिनीमा | १४६ | १२ |
| मारोहती( ता )मा | मारोहतामा | १४६ | १२ |
| प्रपश्ये( श्ये ) | प्रपश्ये | १४६ | १३ |
| रजसि | सरजसि | १४६ | २१ |
| होमं जुहोति | होमाञ्जुहोति | १४६ | २१ |
| ' माध्यंदिनस्य सवनस्य ' | ( नास्ति ) | १४६ | २८ |

| वर्जनीयम् | स्वीकरणीयम् | | पङ्क्तिः |
|---|---|---|---|
| कृतेऽत्र सार | कृते सार | १४६ | १९ |
| सर्वेषां | पूर्वेषां | १४७ | १६ |
| विपृचः स्थ वि पाप्मना | विपृचः स्थविमा पाप्मना | १४९ | २ |
| प्रचरति ते व्यूढा | प्रचारेते व्यूढा | १४९ | २६ |
| प्रचरेत् । यज्ञो हैव | प्रचरेत्तदेतेषां वपाभिः प्रचरेद्यज्ञेहैव | १४९ | २८ |
| उपहरति | उपहरन्ति | १४९ | ३० |
| गोपो वा | गोपा वा | १५० | ८ |
| प्रवत्स्यतीति | प्रवत्स्यन्तीति | १५२ | १ |
| यजेत | यजते | १५३ | ४ |
| प्रतीयात् । अन्यद्दिशा | प्रतीयाद्यदन्यदिशा | १५५ | १६ |
| अन्वहं यजेत । अनु | अन्वहं यजतेऽनु | १५५ | २६ |
| नुमनं | नुमतं | १५८ | १४ |
| धूपयाति पराचीनं | धूपायत्पराचीनं | १५८ | १९ |
| प्रचराति | पचरते | १५८ | १५ |
| यजेत । निशा | यजते निशा | १६० | १५ |
| धूपयति । पराचीन | धूपायत्पराचीन | १६० | २० |
| यद्वस्ते तद्दक्षिणा । एतेनैव | यद्वासो वस्त एतेनैव | १६० | २८ |
| पञ्चेध्मीयेन चरति चतुर्धा | पञ्चेध्मीयेन चतुर्धा | १६१ | ६ |
| हविर्भिर्यजेत पात्रे | हविर्भिर्यजते पात्रे | १६१ | २५ |
| वीरजन९ समा | वीरजनन९ समा | १६२ | २१ |
| निर्वपाति सर्वा | निर्वपतीति सर्वा | १६५ | २३ |
| दक्षिणा गोविकर्त्रक्षावा | दक्षिणा मांम्याकाक्षावा | १६५ | २३ |
| अनृतदूतं ब्रुवते | अनृतमूतं ब्रुवते | १६६ | २९ |
| बाणवन्तो दक्षिणा ॥ ऐन्द्र | बाणवन्त ऐन्द्र | १६७ | १ |
| मामस्य द्दतो | सामस्त्येद्दतो | १६७ | २० |
| परिवहति | परिवहन्ति | १६७ | २१ |
| विविचान्ति | विविच्चाति | १६८ | २७ |
| धर्ममात्रं | धर्मपात्रं | १६९ | ६ |
| संचार्ये( ध्ये )ध्मः | संचार्य इध्मः | १६९ | १२ |
| भविष्यति । सह सोमो | भविष्यतीति सह सोमो | १७० | १४ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्ति |
| --- | --- | --- | --- |
| दधाति । अग्निषोमीयपशु | दधात्यग्नीषोमीयस्य पशु | १७१ | ४ |
| हस्तं वेदय | हस्तं गृहीत्वा वेदय | १७१ | ११ |
| राजेत्युक्तः | राजेत्युक्त | १७१ | २१ |
| ' प्रति ' इत्यारभ्य ' विमृष्टे ' इत्यन्तम् | ( नास्ति ) | १७१ | २९ |
| श्रीन्विष्णुक्रमान्प्राचः क्रामति | श्रीन्विष्णुक्रमान्क्रामयति | १७२ | ३ |
| मधुनः षोडश | मधुवः षोडश | १७३ | १२ |
| पाण्डुरमुष्णीषं | पाण्डरमुष्णीषं | १७३ | १३ |
| श्वेतपाण्डुरमित्याचक्षते | श्वेतपाण्डरमित्याचक्षते | १७३ | १४ |
| इति । आपः केश | इत्यपः केश | १७६ | १९ |
| वासांसि विवृत्य | वासांसि विवृतते | १७७ | २९ |
| तस्मा एतानि | तस्मादेतानि | १७९ | २७ |
| वाजस॑स्तेदि( यातामि )ति | वाज॑स्तेयातामिति | १७९ | २१ |
| धनुः पत्न्यै प्रयच्छाति । धनुरार्त्नि प्र | धनुरार्त्नि पत्निये प्रयच्छाति धनुः प्र | १७९ | २२ |
| राजतमणिं | राजतं मणिं | १७९ | २६ |
| ऊर्गसीत्यौदुम्बरं | ऊर्गस्यूर्जं मे धेहीत्यौदुम्बरं | १७९ | २७ |
| युङ्ङसीति सौवर्णं | युङ्ङसि वर्चोऽसि वर्चोधेहीति सौवर्णं | १७९ | २७ |
| मध्ये सौवर्णमेके समा | मध्यमेके समा | १८० | १ |
| ' एतद्वा विपरीतम् ' | ( नास्ति ) | १८० | ४ |
| अवनह्यति | अवनह्य | १८१ | २९ |
| ओदनमधिपणं विजित्य | ओदनमधिपणान्ति विजित्य | १८२ | ७ |
| हिरण्यकशिपुं होत्रे | हिरण्यकशिपुहोत्रे | १८३ | २६ |
| आमिक्षया प्रचरेत् | आमिक्षया प्रचराति | १८३ | ३१ |
| सुहुतं | सुहुवं | १८४ | १ |
| विभिन्द्यात् । स्फ्य आ | विभिन्द्याद्यत्स्फ्य आ | १८४ | ३ |
| राजतं मणिं च | राजतं च मणिं | १८४ | ५ |
| पूर्वः स्यात्तत्राप | पूर्वस्यास्तत्राप | १८५ | ६ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| वेहायमानामिवोऽनेत्रे | वेहायना इवोऽनेत्रे | १८८ | २७ |
| यजमानो मध्ये | यजमानो बार्हस्पत्यं मध्ये | १८९ | २१ |
| पशुबन्धेन यजेत | पशुबन्धेन यजते | १९० | २ |
| आदित्यायाः। ततः श्वोभूते | आदित्यायाः श्वोभूते | १९१ | १९ |
| होत्रेणाप्रतिषिद्धाः | होत्रेण विप्रतिषिद्धाः | १९२ | १९ |
| मुत्तरं | मुत्तरे | १९३ | २८ |
| ततो यजेत पश्चाप | ततो यजते पश्चाप | १९४ | २७ |
| स्नुतऽ सं | स्नुतऽ सुराऽ सं | १९५ | १९ |
| एकयूपं | एकं यूपं | १९७ | ११ |
| वेदिं करोति | वेदिमुपवपति | १९८ | १४ |
| निषिच्य | निःषिच्य | १९९ | १३ |
| सात्वरीं | सत्वरीं | २०१ | ७ |
| कक्लसक्तु | कलमक्तु | २०२ | ४ |
| वृकैर्यजमानः | वृकौ यजमानः | २०२ | ९ |
| सुराणामनु | सुराम्णामनु | २०२ | २९ |
| सोमान्सुरान्प्रति | सोमान्सुराम्णः प्रति | २०३ | १ |
| यन्मे मनो यमं(नः परागतं) यद्वा मे | यन्मे मनोऽयमकृतं | २०४ | ९ |
| स्रवन्तीः | स्रवन्ती | २०४ | १४ |
| उपतिष्ठते | उपतिष्ठन्ते | २०४ | १४ |
| पङ्क्तिच्छन्दाः पाशो | पङ्क्तिश्छन्दाः पाशो | २०५ | २२ |
| पशुकामश्रिया | पशुकामं श्रिया | २०८ | ७ |
| सांग्रहण्येष्ट्या यजेत | सांग्रहण्येष्ट्या यजते | २०९ | २३ |
| चतुरः सहस्रान्सौवर्णान् | चतुरः सौवर्णान् | २१२ | २७ |
| दक्षिणमुपप्लायति | दक्षिणमप्लावयति | २१५ | ९ |
| निबद्धं | विबद्ध | २१५ | ११ |
| जातमुपेयुस्तान्पृच्छेयुः | जातमुपनिगच्छेयुस्तान्पृच्छेयुः | २१८ | ३ |
| वेत्थेति। यो न | वेत्थेति तेषां यो न | २१८ | ४ |
| तं जित्वा तस्य | तं जिनीयुस्तस्य | २१८ | ४ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| वीणागथिनो | वीणागाथिनौ | २२० | ९ |
| कश्चिपोरग्रेण होतारं | काशिम्वोरग्रेण होतारं | २२० | २७ |
| हो १ इह होतरि | हो१ इहोतरि | २२१ | ९ |
| ग्रजेऽश्वं बध्नाति तस्मै | ग्रजेऽश्वं बध्नन्ति तत्रास्मै | २२२ | ९ |
| संगायेति | संगायतेति | २२४ | २४ |
| युनक्त्विति | युनक्त्विति | २२६ | १२ |
| अरत्निं सं | अरत्निसं | २२६ | १६ |
| द्वावमितो भवतः | द्वावुपस्थानौ भवतः | २२६ | १९ |
| गोतमचतु | गोतमश्चतु | २२६ | २८ |
| सेनाभ्यः | सेनेभ्यः | २२७ | ५ |
| मिन्वीत | मिन्वन्ति | २२७ | २८ |
| मुपतल्पना | मुपतल्पाना | २२८ | ४ |
| युजोऽश्वेनान्ततो जुहति | युजोऽश्वेनाऽऽज्येनान्ततो जुहति | २२८ | १० |
| आयुर्यस्य पवते | ज्योतिर्यज्ञस्य पवते | २३० | १० |
| विभावसुः । दधाति | विभूषसुः । दधाति | २३० | ११ |
| अश्वस्य ग्रीवासु सौवर्ण५ रुक्मं प्रतिमुञ्चते | सौवर्ण५ रुक्ममश्वस्य ग्रीवासु प्रतिमुञ्चते | २३० | १२ |
| उक्थाः संचरा | उक्तसंचरा | २३१ | ३० |
| उक्थाः संचरा | उक्तसंचरा | २३२ | ७ |
| उक्थाः संचरा | उक्तसंचरा | २३२ | १४ |
| करोति ॥१८॥' एतदग्रे | ( तेषां विꣳशतिं विꣳशतिमेकैकस्मिन्यूप उपाकरोत्यैन्द्रदशमानेके समामनन्तीन्द्राय राज्ञे सूकर इत्यारण्यान्पशून्समशः प्रतिविभज्य यूपान्तरालेषूपाकरोति ) इति ग्रन्थोऽधिकः | २३२ | १८ |
| परिवृक्तिः | परिवृक्ती | २३७ | २ |
| परिवृक्तिः | परिवृक्ती | २३८ | |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| धन्वना गा इति धनु | धन्वना गा धन्वनाऽऽजिं-जयेमेति धनु | २३८ | २१ |
| कर्णप्रियमिति | कर्णमिति | २३८ | २३ |
| सारथिमभिमन्त्रयते | सारथिमामन्त्रयते | २३८ | १९ |
| वाजीति स्वयं स्वयं वाजि | वाजीति च स्वयं वाजि | २३९ | १९ |
| अवगाहन्ति | अवगाहयन्ति | २३९ | २० |
| श्वायोपयन्ति | श्वायोपवपन्ति | २४० | ८ |
| अभिमन्त्रयते | अभिमन्त्र्य | २४० | १४ |
| पर्यङ्क्याचान्यूपेषु | पर्यङ्क्यान्यूपेषु | २४० | १८ |
| जुहोति। पर्यग्निकृतान् ग्राम्यान्पशूनालभन्ते प्रारण्यानुत्सृजन्ति पर्यग्निकृतानां द्वंद्विनां वडवे पुरुषे वा (पी चा) त्सृजन्ति तार्प्ये | जुहोत्यपर्यग्निकृतानामा-ग्राम्यान्पशूँल्लभन्ते प्रारण्यान्सृजन्ति पर्यग्निकृतानां द्वंद्विनां वडवे पुरुषे वोत्सृजन्ति तार्प्ये | २४१ | २ |
| श्यामूलेन | ज्यामूलेन | २४१ | ९ |
| व्यतिषजते | व्यतिषजेते | २४३ | ८ |
| मेधन्ते | मेधन्ति | २४३ | २० |
| त्रिर्महिषी गर्हते त्रिः पत्नयोऽभिमेधन्त उत्तर | पुनरेवं गर्हते त्रिः प्रमेधंत्युत्तर | २४३ | २२ |
| हिरण्मयीभिः | हरिणीभिः | २४४ | १ |
| एकधेतरेषां पशूनां | एकधैतरेषां पशूनां | २४५ | ७ |
| वपां मेदः प्रष्येति वा | वपामेदसः प्रेष्येति वा | २४५ | १४ |
| होता। अथ वा किं | होतितरथा वा किं | २४६ | ९ |
| प्रज्ञातानि | प्रतिज्ञातानि | २४६ | ७ |
| ब्राह्मणो विजयं संज्ञपयन्ति प्रजापतयेऽश्वस्य तूपरस्य | ब्राह्मणो विजयं संज्ञापयन्त्यश्वस्य तूपरस्य | २४६ | ७ |
| लोम च तिर्यगसंभिन्दन्तः | लोम तिर्यगसंभिन्दन्तः | २४६ | १५ |
| 'माहेन्द्रस्य स्तोत्रं प्रत्यभिपिद्यति | (नास्ति) | २४६ | २८ |
| 'हिरण्यगर्भः समवर्तताग्र इति | (नास्ति) | २४७ | ७ |
| प्राजापत्यान् | प्राजापत्याः | २४७ | ७ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| महिम्नोरुद्रेकेण | महिम्नोद्रेकेण | २४८ | ९ |
| ग्रीष्माय स्वाहेति जुहोति हवि | ग्रीष्माय स्वाहेति षड्तु-भ्यो हुत्वा हवि | २४८ | २१ |
| भवन्तीति विज्ञायते स्ते | भवन्ति स्ते | २४९ | २७ |
| प्रतिसंख्यायाऽऽहुतीर्जुहोति। | प्रतिसंख्यायमाहुतीर्जुहोति | २५० | २ |
| ग्राम्यान्हुत्वा | ग्रामेऽनुवाक्यान्हुत्वा | २५० | ३ |
| द्विपदाः हुत्वा | द्विपदामुत्तमाः हुत्वा | २५० | ९ |
| ऐकादशिनान्वायव्यान्पशून् | ऐकादशिनान्व्यान्पशून् | २५१ | १४ |
| अवभृथमवयन्ति | अवभृथमभ्यवयन्ति | २५२ | ११ |
| कालकाभ्रुमाश्विभ्यां | कालकाभ्रामाश्विभ्यां | २५३ | ४ |
| भ्यां मध्यमे विशाल | भ्यां मे विशाल | २५३ | ४ |
| पशुपुरोडाशं नि | पशुपुरोडाशान्नि | २५३ | १३ |
| यथादेवतं | यथादेवतं | २५४ | २७ |
| यजेत | यजते | २५४ | २८ |
| सवितुः। विश्वानि | सवितुर्वरेण्यं विश्वानि | २५६ | २९ |
| एकादशिनीः सः | एकादश दशिनीः सः | २५६ | ९ |
| नाराशंसेषु चात्रमन्त्रं | नाराशंसेष्वत्रमन्त्रं | २५८ | २५ |

# अथ सत्याषाढहिरण्यकेशिसूत्रीय षष्ठभागस्य शोधनपत्रम् ।

पञ्चदशषोडशप्रश्नयोः ।

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| तदेतामिष्टिं सꣳस्था | तादिष्टिꣳ सꣳस्था | २६५ | १४ |
| प्रणयनवर्जमावर्तेत। या प्रकृ-तिर्दक्षिणाग्नेः | प्रणयनवर्जं या प्रकृति-र्दक्षिणाग्नेः | २६६ | १ |
| सा दोहस्थाने प्रतीयात् | सा दोहस्य स्थाने प्रतीयात् | २६७ | २२ |
| यात् । अन्यतरस्मादपा | यान्यतरस्मादपा | २६७ | २२ |
| अथोत्तर | अथेतर | २६८ | १५ |
| अध्वर्यु मा मा हिꣳ | अध्वर्यु मा हिꣳ | २७२ | २८ |
| विदध्या | निदध्या | २७२ | १० |
| यच्छेत्येनमग्नौ प्रहरति | यच्छेति निर्वर्तमानमाह-वनीयेऽनुप्रहरेत् | २७३ | ११ |
| अजस्य तु ततो नाश्नीयात् | अजस्य तु नाश्नीयात् | २७४ | १५ |
| यस्यैतं संव | यस्य तꣳ संव | २७५ | १ |
| वाक्येन | दाव्येन | २७६ | ४ |
| सूक्ष्काग्निना | सूतिकाग्निना | २७६ | ७ |
| विकिरो यश्च विष्कर: | विकुरो यश्च विष्टिर: | २७६ | ९ |
| ' वातभृतां० मुत्तमाम् ' | ( नास्ति ) | २७६ | २४ |
| मिष्टिं निर्वपन्ति | मिष्टिं तन्वते | २७९ | १६ |
| पुनरेवेति | पुनरेवेति | २७९ | १८ |
| विच्छिनत्तीति विज्ञायते प्र | विच्छिनत्तीति प्र | २७९ | १९ |
| चरन्तीति दर्भस्तम्ब | चरन्तीति स्तम्ब | २८१ | ११ |
| तन्मयीत्येनदभिमन्त्र्य यदि | तन्मयीत्यग्निहोत्रमभि-मन्त्रयेत यदि | २८१ | २४ |
| कीदृग्घुत्वा | कीदृक् च हुत्वा | २८१ | २६ |
| तां चैव | तां वेव | २८२ | १ |
| एकेषां चतुर्थ | एकेषां यदि चतुर्थ | २८२ | १५ |
| कीदृग्घुत्वाऽन्यां | कीदृक् च हुत्वाऽन्यां | २८२ | २० |
| क्षेम्या एधि | क्षेम्य एधि | २८६ | २६ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| एककपालमेके समामनन्ति तस्याः | एककपालं तस्याः | २८७ | १ |
| जुहुयात् | जुहोति | २८७ | १९ |
| आसीत यदा | आसीत स यदा | १८८ | १० |
| मतेऽष्टाकपालं | मते पुरोडाशमष्टाकपालं | २८८ | २४ |
| स्वयं कृण्वानः सुग० दिव्यं ततान । त्वं नस्त | स्वयं कृण्वानस्त्वनस्त | २८९ | १७ |
| पावक दीयत् । हव्या | पावक दीद्यत् । हव्या | २९१ | ३ |
| मतेऽष्टाकपालं निर्वपति न | मते निर्वपति न | २९१ | ७ |
| मादायी स्यात् | मदायी स्यात् | २९१ | २४ |
| सरसे | सहसे | २९२ | २१ |
| पिबेत् '( अग्नि० यते )' | ( कंसस्थं नास्ति ) | २९५ | २७ |
| यद्यस्तमिते | यद्यनस्तमिते | २९६ | ५ |
| '( वर्धतां० स्वाहेति )' | ( नास्ति ) | २९७ | २४ |
| पद्ः हिते रश्मीनन्वा | पद्ः हिते सूर्यस्य रश्मीनन्वा | २९८ | १४ |
| निर्वपेत् । अथोऽन्तिकात् | निर्वपेत्पथोऽन्तिकात् | २९८ | १९ |
| यस्य वाऽग्निभिः | यस्यान्यैरग्निभिः | २९९ | ८ |
| प्रमीतस्य । तस्याभिवान्य | प्रमीतस्याभिवान्य | २९९ | १२ |
| धारयन्तीति विज्ञायते । अपो | धारयन्तीत्यपो | २९९ | २१ |
| यद्युत्पूतं चित्रं देवं यदस्य | यद्युत्पूतं यदस्य | ३०१ | १ |
| अभिमया प्रतिमयोन्मया प | अभिमया विमयोन्मया प | ३०१ | १३ |
| स्वाहेति स्कन्नमनुमन्त्रयेतेति सर्वेहविषा | स्वाहेत्येकेषां सर्वेषां हविषा | ३०२ | २ |
| पत्नी संयाजयन् क | पत्नीः संयाजयिष्यन् क | ३०३ | ८ |
| नवस्याश्नीयात् । आनीतो वा एष देवानां य आहिताग्निरदन्त्यस्य देवा अन्नम् । यदकृत्वाऽऽग्रयणं नवास्याश्नीयाद्देवेभ्यो( वानां ) भागं | नवस्याश्नीयाद्देवानां भागं | ३०३ | ११ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
| --- | --- | --- | --- |
| त्रिष्टुग्याज्या | जगतीयाज्या | १०४ | ९ |
| पशून्छमयेत | पशून्छमायेत | १०४ | १३ |
| पृणाका वा | पृणाको वा | १०४ | २१ |
| श्रपयति | श्रपयित्वा | १०४ | १० |
| दानेश्वरेयुः । नैर्ऋतः | दानेश्वरन्ति नैर्ऋतः | १०४ | ११ |
| ( यावदन्ते वा व्यापयेत ॥ ३२ ॥ ) | ( नास्ति ) | ३०७ | १ |
| यज्ञो हि यज्ञस्य | यज्ञा यज्ञस्य | ३०७ | १८ |
| अभोजनीयं स्यान्न तेन | अभोजनीयं न तेन | ३०७ | १० |
| यजेत पुरस्ताद्वा स्विष्टकृतः यदि भागिनीं | यजेद्यदि भागिनीं | ३०८ | २८ |
| स वा विजेत त | सं वा विजीत तम | ३१० | २१ |
| स्वं मा सीद | स्वमासीद | ३१० | २४ |
| आधारयेत् । भूत्वा प्रभवती | आधारयेद्भुत्वा प्रभवती | ३१० | २७ |
| विदथेषु जग्मयुः | विदथेषु जग्मयः | ३११ | २४ |
| पितेरा मदन्ति मा नो | पितरो भवन्ति मा नो | ३११ | २७ |
| पृथिवि भूवारि | पृथिवी विभूवरी | ३१२ | २८ |
| व इत्येताभिः सप्ताभिः | व इति सप्ताभिः | ३१३ | ७ |
| सँसिम्नेदाभि | सिम्नन्यभि | ३१३ | ७ |
| अभ्युन्नयेयुरुपजुहुयुर्वा | अभ्युन्नयेत्पुनरुपजुहुयुर्वा | ३१३ | १३ |
| वा । हुतेति रिक्तस्याऽऽशयित्वा | वाऽतिरिक्तं स्पर्शयित्वा | ३१३ | १८ |
| ' होतृ० करोति ' | ( नास्ति ) | ३१३ | २० |
| ' ( द्विरात्र० मेव ) ' | ( नास्ति ) | ३१४ | १९ |
| स्युक्तेऽन्वारब्धे यजमाने | स्युक्तत्वाऽन्वारब्धे यजमाने | ३१५ | १८ |
| स्यादुक्थ्यं कुर्वीत । यदुक्थ्यः षोडशिनम् । यदि षोडश्यतिरात्रम् । यद्यतिरात्रोऽप्तोर्यामम् । यद्यप्तोर्यामो द्विरात्रम् । यदि द्विरात्रस्त्रिरात्रम् । यदि त्रिरात्र एकस्तोत्रमेव । अभि | स्यादुक्थ्यः कार्यो यद्युक्थ्यः षोडशी यदि षोडश्यतिरात्रो यद्यतिरात्रोऽप्तोर्यामो यद्यप्तोर्यामो द्विरात्रो यदि द्विरात्रस्त्रिरात्रोऽभि | ३१६ | २० |
| संप्रेष्यति | संप्रेष्यन्ति | ३१७ | ६ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| वर्षीयाऽसं यज्ञक्रतुं कुर्युः | वरीयाऽसं कुर्युः | ३१७ | १७ |
| पाययत्येतासामपां | पाययेचेतासामपां | ३१८ | २२ |
| वाचं म ऐन्द्र | वाचं त ऐन्द्र | ३१८ | २४ |
| अङ्गानि म उक्थ्यः | अङ्गानि त उक्थ्यः | ३१८ | २६ |
| प्रतिजपिते | प्रतितपिते | ३१९ | ७ |
| लीयं मनुपरी | लीयं धिष्णियमनुपरी | ३२० | १६ |
| गौरवीतं | गौरिवीतं | ३२१ | २१ |
| सोममय( वि )भज्य | सोममपभज्य | ३२२ | १२ |
| प्रतिपद्यते | प्रतिपद्येत | ३२२ | २१ |
| सऽस्कृत्य | सऽमृत्य | ३२२ | २१ |
| नेदिष्ठी स्यात्तत आहृत्य | नेदिष्ठी सोमः स्यात्त-माहृत्य | ३२३ | १० |
| फाल्गुनान्यथार्जुनान्यथा-ऽऽदारान् | फाल्गुनान्यथार्जुनानि यदि नार्जुनान्यथाऽऽदा-रान् | ३२४ | ७ |
| सोमः स्याद्रथन्तर | सोमो रथन्तर | ३२४ | २८ |
| ' तेभ्य एव ' | ( नास्ति ) | ३२५ | १ |
| दद्यात्पूर्व | दद्याद्यत्पूर्व | ३२५ | ५ |
| अध्वर्युः स्पाशयेत् | अध्वर्युरपाशयेत् | ३२५ | २५ |
| कुर्वीरन् । | कुर्वीरन् ( ख० २३ ) | ३२८ | १४ |
| भवतीति विज्ञायते यदि | भवतीति यदि | ३२८ | १७ |
| शुक्रादग्रुवाच | शुक्राग्रुवाच | ३३० | २३ |
| वर्चो मे देहीति | वर्चो मयि देहीति | ३३१ | १३ |
| वषट्कारानुवषट्कृते | वषट्कृतानुवषट्कृते | ३३२ | ६ |
| तस्मादेनमा | तस्मादेतमा | ३३२ | ७ |
| वृतू । इमं | वृतू त इमं | ३३३ | २ |
| त इन्द्रपीतस्य | त इन्द्राविन्द्रपीतस्य | ३३३ | १९ |
| वृषभिस्तप स्तैस्तपा | वृषभिर्वराहैतया तपस्व | ३३४ | २ |
| तपस्व तपसा तपिष्ठ | तपसा तपिष्ठाः | ३३४ | २ |
| स स्मा | संमा | ३३४ | ३ |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| आसते | आनशे | ११४ | ४ |
| मिनोत्यजरः | मिनात्यजरः | ११४ | ४ |
| तेजनं स्वं जरा | तेजनं पुनर्जरा | ११४ | ६ |
| वक्षणां भयन् | वक्षणा जनयन् | ११४ | ९ |
| वरान्ददाति | वरं ददाति | ११४ | ११ |
| '( दशा० पिबेत् )' | ( नास्ति ) | ११४ | १७ |
| सौमो जुहुयात् | सौमो जुहोति | ११४ | १८ |
| विष्णुस्त्वाऽन्वेत्विति | विष्णुस्त्वाऽनुविचक्रम इति | ११६ | १ |
| यद्वालिक्षच्छ्रपान्मुखेन | यदपालिक्षच्छ्रपान्मुखेन | ११६ | १७ |
| श्वापदावलीढमभिमन्त्रयते । तस्यै | श्वापदावलीढं तस्यै | ११६ | १८ |
| '( अभ्य० वत् )' | ( नास्ति ) | ११६ | २० |
| पात्रं प्रयुज्यते | पात्रं पुनः प्रयुज्यते | ११६ | २० |
| कृधीत ऊर्ध्वा | कृधीन ऊर्ध्वा | ११७ | २१ |
| सर्वोत्तमां | सर्वश्रोत्तमां | ११८ | १९ |
| विबलान्कोशान् | विबिलान्कोशान् | १४१ | ११ |
| पुरोडाशम् । एतं | पुरोडाशं वैतं | १४१ | २१ |
| अभिमन्त्य | अभिमन्त्रयते | १४१ | २८ |
| '( सर० लम्भं )' | ( नास्ति ) | १४२ | २ |
| औदुम्बरी न | यथोदुम्बरी न | १४२ | २६ |
| श्रियो तिष्ठ | श्रिया तिष्ठ | १४२ | २७ |
| वोच्छ्रयति सं | वा सं | १४३ | १ |
| दक्षिणामध्वर्यु | दक्षिणमध्वर्यु | १४३ | ७ |
| विज्ञायते पीवा | विज्ञायते च पीवा | १४७ | २ |
| दीक्षते | दीक्षेत | १४७ | ५ |
| यजते | यजन्ते | १४७ | ५ |
| गृह्णाति । ऋत्विजो | गृह्णातीत्यृत्विजो | १४९ | ४ |
| ' गृहपतेरेव ' | ( नास्ति ) | १५० | १० |
| निवपेरन् | विनिवपेरन् | १५१ | १३ |
| साधुतुल्या य | साधुकृत्या च | १५१ | १९ |
| इत्युक्तम् | इत्युक्त्वा | १५१ | २० |

| वर्जनीयम् | स्वीकरणीयम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| तीति विज्ञायते षट्सु | तीति षट्सु | ३५१ | ७ |
| सिनः स्तोतारं | सिनः प्रस्तोतारं | ३५२ | २९ |
| सोमविक्रयिणी | सोमक्रयणी | ३५३ | २७ |
| ज्योतिष्टोमः । वैश्वानरो | ज्योतिर्वैश्वानरो | ३५५ | ११ |
| उत्तरोत्तरे यजु | उत्तरोत्तरेण यजु | ३५६ | १८ |
| तम् । एवमुत्तरेषु | तमुत्तरेषु | ३५९ | २८ |
| प्रायणीयोऽतिरात्र | प्रायणीयेऽतिरात्र | ३६० | ९ |
| विहृता | विहृता | ३६० | ६ |
| सत्रे तु | सत्रभूते तु | ३६० | २६ |
| हुत्वेदमहं मां कल्याण्यै | हुत्वाऽन्वहं दक्षिणा नयन्तीदमहं मां कल्याण्यै | ३६० | २६ |
| लोकाय दक्षिणां | लोकायामृतत्वाय दक्षिणां | ३६० | २७ |
| नयामीति यजमानाः कृष्णा | नयामीति कृष्णा | ३६० | २८ |
| क्रियते | क्रियन्ते | ३६१ | २ |
| माहेन्द्रस्तोत्र | माहेन्द्रस्य स्तोत्र | ३६३ | २० |
| न्यूङ्खमेतदहर्भवति । स्वय | न्यूङ्खः स्वय | ३६५ | १७ |
| पिबतं वौषाडिति यद्यन्यूढः ( बतमित्यन्यूढे यजति ) | पिबतमित्यन्यूढे यजति | ३६५ | २७ |
| यद्यं वृत्वा | यं यं वृत्वा | ३६६ | १ |
| पिबतं वौषाडिति तस्य प्रचरितं मरुत्वतीयैर्भवति ( बतमिति न्यूढे ) यत्प्राक् | पिबतमिति न्यूढे यत्प्राक् | ३६६ | ४ |
| उपरुन्धन्ति बर्हिस्थानेऽद्भिर्दू- | उपरुन्धन्त्युदीची | ३६६ | १४ |
| र्वाबास्ताभिर्मा | स्ताभिर्मा | ३६६ | १४ |
| उपह्वयाति | उपह्वयति | ३६७ | २६ |
| नित्या औदुम्बरी | नित्याश्चौदुम्बरी | ३६८ | ११ |
| अध्वरमिह रतिरिह रन्तिरिह रमध्वमिह रन्तिरिह रमतिरिह रमध्वमिह वो रमतिः | अध्वरमिह रजिरिह रन्तिरिह रमादिह रमध्वमिह वो रतिः | ३६८ | |
| होतृकाः | होत्रकाः | ३७० | |

